॥ श्रीः ॥

# भारतानुवर्णनम् ।

OR

# A Description of India

By


**T. GAṆAPATI ŚĀSTRI**

Principal,

**H. H. The Maharaja's Saṇskrit College,**

Trivandrum.



*'Printers' Jobbing Press'*

Trivandrum.

**1905.**

# PREFACE.

WITH the idea of securing circulation for my Sanskrit Readers in Europe, I sent copies of them towards the close of 1901, one set to M. Sylvain Levi, Professor an College de France and another to Professor H. Jacobi, Bonn, Germany. Both of these gentlemen while commending the Readers for the idiomatic sanskrit in which modern subjects and ideas were successfully expressed, were of opinion that the subject matter was not suitable to European students who are generally grown up boys when they begin the study of Sanskrit, and that Readers of other contents would be welcome to them. M. Sylvain Levi added also that, should I ever think of compiling such a work, he would be glad to communicate with me about the plan of the work and the matters to be included therein. On my agreeing to his suggestion, he prescribed towards the middle of 1902, as follows:— "The first part should consist in a summary description of classical India giving the Sanskrit names of the principal mountains, rivers, provinces, towns of India, connected with the modern ones. Then a sketch of the ancient History of India up to the Musalman times, not intending of course to be a complete history, but marking the epochs: Buddha, Chandragupta and the Greeks, Asoka, the Indo-scythians, the Indo-Greeks, the Guptas and the Hindu revival, Harsha and Bhoja. Then the epic and legendary figures: Râma and the Râmâyana, the Pândavas and the Mahâbhârata, Vikramâditya, Sâlivâhana. A short chapter on Sanskrit literature. Then and that would be the most required part, sketches of actual Indian life, the Hindu boy at home, the same in the school; the day of a Pandita; the divine service in a Hindu Temple; a village and the peasants: lodgings, handicrafts, livings; the bazaar in a city, the merchants and the things sold; some

clear and real hints on castes............ The style should be a plain one free from any research or pedantry, easy and flowing as suits the European mind." This book was thereupon prepared on the lines above indicated and the manuscripts sent to the Professor about the close of 1903. In accordance with his desire expressed, while returning the compilation with his entire approval, the proof sheets were all sent to him and he has carefully looked through the whole of them.

A Map of India showing the positions of the ancient kingdoms and cities, and giving the ancient names of rivers, mountains, etc., as far as they have been ascertained and identified at present by the researches of orientalists, has been added to the book, for the purpose of giving definiteness and clearness to the conceptions about the ancient geography and history of India, as they would necessarily be only vague without it.

Though undertaken and compiled at the instance of a European Professor for European students, the book especially Part I dealing with ancient Geography and the major portion of Part II containing sketches of ancient History, I believe, would not be without use to Indian students as well, who wish to know something about the past history of their native land.

My sincere thanks are due to Professor Sylvain Levi, not only for his many suggestions in the preparation of the work, but also for his kindly taking pains to look through the proof sheets.

TRIVANDRUM }
July 1904. }

T. GAṆAPATI SÂSTRI.

# Introduction.

THIS little book will, I hope, mark a new departure in the deve'opment of Sanskrit scholarship in India. It will, perhaps, remind some learned readers of an other work, the Âryavidyâsudhâkara published at Bombay by Bhatta Yajnesvara Sarman A. D. 1868. But the comparison of these two books, equally honourable to both, brings to the full light the advance made since forty years. The Bhatta's book, useful as it was and still is, dwells mainly upon Sruti, Smriti and Darsanas; it is conceived and executed in tne traditional line of Hindu science; it follows faithfully on the steps of Sâyana and Sâyanists. Our Sâstri's endeavour tends to reconcile Hindu tradition with the historical researches of foreign scholars. Of course, it is not what we should call a historical work, but it is a first step in order to bring the student of Sanskrit language and literature in contact with the problems of Hindu History. The picture of ancient India, as drawn by the Sâstri, is no doubt a flattered one. But who would blame him? A loyal Hindu as he is, he looks into the past for an ideal of Aryan morals, worthy to be propounded to the present time. Written in a plain and good style, without any show of pedantry *à la* Pandit, this book will certainly prove useful in the Sanskrit Schools of India. Foreign students of Sanskrit will also welcome it, as the Sanskrit language plays here the part it ought to play, I mean as a key to Hindu lore and Hindu civilization.

Paris, October, 1904. } SYLVAIN LEVI
*Professor an College de France.*

# निवेदना

---

मत्पाठावलीः प्रकाशितचरीः प्रचारकामनया प्रेषिताः **प्रान्स**-देशीयो विद्वन्महाशयः **सिल्वैन् लेविः** जर्मनिदेशीयो विद्वन्महाशयो **जाकोबि**श्चाभिनन्द्य तासु प्रतिपाद्यमानानां विषयाणां यौरोपच्छात्रान् प्रत्यपूर्वत्वाभावादननुगुणत्वमवोचताम् । 'यौरोपच्छात्रानुगुणा चेत् पाठावलिश्चिकीर्ष्यते, तर्हि तस्या विधां बोधयामि' इति च विशिष्य लेविमहाशय उक्तवान् । अथ बोधनमर्थितोऽसावविस्तृतिपरां कामपि विधामित्थमदर्शयत्—'ग्रन्थे तावत् प्राचीनभारतखण्डे प्रधानानि पर्वतनदीदेशनगराण्याधुनिकनामसंवादेन निर्देष्टव्यानि । ततो भारतस्य पुरावृत्तं महम्मदीयकालावधिकं—तत्र बुद्धश्चन्द्रगुप्तो यवना अशोकः शकहिन्दवो यवनहिन्दवो गुप्ता विक्रमादित्यः शालिवाहनो हर्षो भोजो रामचरितं पाण्डवचरितं साहित्यम् इत्येतत् प्रतिपाद्यम् । अथाधुनिकहिन्दुस्थितिः—तत्र बालाः पण्डिता देवकैङ्कर्यं ग्रामो गृहं शिल्पं जीविका आपणः पण्यम् इत्यादिर्विषयः । ग्रन्थेऽस्मिन्नर्थप्रतिपत्तिकष्टापेता दुष्प्रौढिवर्जिता सुकुमारवाक्प्रवाहा च शय्या भवितुमर्हति' इति । तदनुरोधेन ग्रन्थमिमं **भारतानुवर्णनं** नाम प्रणीय पूर्वतरवर्षशेषे लेविमहाशयाय प्राहिणवम् । तस्य तमभिनन्द्य प्रतिप्रेषितवत इच्छानुसारात् तन्मुद्रणपत्राणि सर्वाणि तस्मै संशोधनार्थं प्रैषयम् । तानि स सूक्ष्मेक्षिकया सदयं समशोधयत् ।

अत्र वर्णितानां प्राचीनजनपदादीनां स्थानविज्ञानाय **प्राचीन-भारतालेख्यम्** अत्रायोजयम् ।

यौरोपविद्वदुपदर्शितया दिशा यौरोपच्छात्रान् प्रति विरचितोऽप्ययं ग्रन्थो, विशिष्य त्वस्य प्रथम-द्वितीयभागौ भूप्रकरण-पुरावृत्तप्रकरणाख्यौ स्वदेशजिज्ञासूनां भारतच्छात्राणामपि न खलु नोपकाराय सम्पद्येरन् ।

अस्य ग्रन्थस्येतिकर्तव्यतोपदेशेन मुद्रणपत्रसंशोधनेन च मह्यं महान्तमुपकारमाहितवति तत्रभवति **लेविमहाशये** भृशं कृतज्ञोऽस्मि ॥

अनन्तशयनम्.<br>मिथुनं १०७९.

त. गणपतिशास्त्री.

# भारतानुवर्णनस्य विषयानुक्रमणी ॥

## भूप्रकरणं—Part I.



## पुरावृत्तप्रकरणम्—Part II.

## आधुनिकस्थितिः—Part III.

|| श्रीः ||

श्रीगणेशाय नमः ।

# भारतानुवर्णनम् ।

## भूप्रकरणं नाम प्रथमो भागः ।



## भारतम्.

इदं तावद् 'भारतम्' इत्याख्यायते, 'भरतखण्डम्' इति च, यदधुना जना '[1]इन्द्या' इति नाम्ना व्यवहरन्ति । अस्य 'भारतम्' इति संज्ञा पुरा भरतनाम्ना चक्रवर्तिना परिपालनात् सिद्धा ।

अस्य सीमा [2]हिमालयः [3]सिन्धुनदः समुद्रश्च । तत्रोत्तरा सीमा हिमालयो भवति; पूर्वा सीमा [4]भर्मदेशो [5]वङ्गमहासमुद्रश्च; [6]दक्षिणमहार्णवो दक्षिणा सीमा; [7]पश्चिमसमुद्रः सिन्धुनदश्च पश्चिमा सीमा ।

---

1. India. 2. Himalaya mountains. 3. Indus. 4. Modern Burmah. भर्म means 'gold'. The 'सुवर्णभूमि' to which Asoka sent missionaries seems, therefore to be modern Burmah as identified by Beal. 5. Bay of Bengal. 6. Indian ocean. 7. Arabian sea.

अस्य दैर्घ्यम् उत्तरतः कश्मीरदेशात्[1] प्रभृति दक्षिणत आ कुमार्याः[2] १९०० [3] क्रोशान्[4] व्याप्नोति। अस्य विस्तारः पश्चिमतः सिन्धुमुखात् प्रभृति आ कामरूपस्य[5] पूर्वावधेः १८०० [6] क्रोशान् अतिगच्छति। चतुरश्रमानं[7] चास्य १६३२००० [8] क्रोशान् आहुः॥

आर्यावर्तः—अक्षांशवृत्तस्य[9] त्रयोविंशस्य पञ्चविंशस्य चान्तराले विन्ध्यो[10] नाम पर्वतस्तिर्यग् भारतम् आक्रम्य तिष्ठति। तस्योत्तरो भागो 'हिन्दुस्थानम्'[11] इत्याख्यातः।

पुरा तावद् आर्या[12] देशान्तराद् भारतं प्रविष्टाः सिन्धुनदस्य तीरं प्रथमम् अधिवसन्ति स्म। तेषु सिन्धुसम्बन्धात् सिन्धुशब्दे प्रयोक्तव्ये तत्समीपैः पौर-[13]

---

1. कश्मीरदेश=Kashmere. 2. कुमारी = Cape Comorin. 3. नवशताधिकं सहस्रम्. 4. Miles. 5. कामरूपम्= Assam. 6. अष्टशताधिकं सहस्रम्. 7. Square measure. 8. द्वात्रिंशत्सहस्राधिकानि षोडश लक्षाणि. 9. अक्षांशवृत्तम्=Parallel of Latitude. 10. Vindhya mountains. 11. Hindustan. 12. Aryans. 13. पारसीकाः = Persians.

सीकैस्तद्विकारो[1] हिन्दुशब्दः प्रयुक्तः। अतस्तेषां स्थानं हिन्दुस्थानम् इति प्रसिद्धम्। अस्य 'आर्यावर्त' इत्यपि संज्ञा समन्ताद् आर्याणाम् अत्र वर्तनात्। आर्या आवर्तन्ते पुनः पुनर्जायन्तेऽत्रेत्यतो वा तथा व्यपदेशः[2]।

गङ्गया[3] सिन्धुनदेन च सम्बद्धाः प्रदेशाः सिन्धोरभिमुखो मरुः[4] 'मध्यभारतम्[5]' इति प्रसिद्ध उन्नतो देशश्च हिन्दुस्थानस्य भूमयः॥

दक्षिणापथः—विन्ध्याद् दक्षिणो भागो 'दक्षिणापथ[6]' उच्यते।

विन्ध्यादनन्तरास्तावद् गम्भीरा नर्मदातटा[7] वर्तन्ते। तत ऋक्षपर्वतोऽस्ति[8]। ततो निम्नस्तपतीनद्याः[9] प्रदेशः। ततः पूर्वया पश्चिमया च गिरिश्रेण्या[10] समुपश्लिष्टस्त्रिकोणप्रायः[11] कुमारीपर्यन्त उन्नतो देशो

1. तस्य (सिन्धुशब्दस्य) विकारः=Corrupt form. 2. Naming. 3. गङ्गा=Ganges. 4. Desert. 5. Central India. 6. Deccan. 7. Valleys of the Nerbudda. 8. Satpura mountains. 9. तपती=Tapti river. 10. गिरिश्रेणी= Range of mountains. 11. Triangular.

विद्यते । त एते प्रदेशाः पूर्वपश्चिमयोर्गिरिश्रेण्योः समुद्रस्य च निम्नवक्रा[1] मध्यभागाश्च दक्षिणापथस्य भूमयः ।

गुर्जरदेशो[2] वङ्गदेशश्च[3] हिन्दुस्थानस्य सामीप्यात् तत्रान्तर्भवतः ॥

## सहजलक्षणानि[4].

भूमेः सहजानि लक्षणानि यानि सम्भाव्यन्ते, तानि सर्वाणि भारते पश्यामः । अत्र हि तुङ्गाः पर्वताः सन्ति; भीषणानि वनानि विद्यन्ते; विस्तीर्णा उर्वरा[5] उपलभ्यन्ते; आजयः[6] सिकतिलाः[7] प्रदेशा मरवो मालानि[8] च वर्तन्ते; नद्यो बहुलाः प्रवहन्ति; महान्ति च सरांसि[9] समुल्लसन्ति ॥

## पर्वताः.

**हिमालयः**—'हिमालयः' पूर्वापरायतस्तिष्ठति[10] ।

---

1. Deep and narrow. 2. Guzerat 3. Bengal. 4. Natural features. 5. Fertile soil. 6. Level ground. 7. Sandy. 8. Rising ground. 9. Lakes. 10. Extending from east to west.

अयं १६०० [1] क्रोशान् दीर्घस्त्रिंशतोत्तमांस्तदर्धावरांश्च [2] [3] क्रोशान् विस्तीर्णः ।

अस्य २३००० [4] पदोन्नतानि शिखराणि पञ्चचत्वारिंशत् सन्ति; विंशतिसहस्रपदोन्नतानि शिखराणि परश्शतानि [5] वर्तन्ते । अस्य तुङ्गतमं शिखरं २९००० [6] पदान्युच्छ्रयते [7] । ईदृग् उन्नतम् अन्यद् गिरिशिखरं लोके न विद्यते ।

हिमालयस्य दक्षिणे पार्श्वे १६२०० [8] पदेभ्य ऊर्ध्वे देशे हिमसंहतयः [9] कठोराः सन्ति; उत्तरे पार्श्वे तु १७४०० [10] पदेभ्य ऊर्ध्वे देशे ताः कठिनाः सन्ति । तासु काश्चिद् एकादशक्रोशदीर्घाः सार्धक्रोशविस्तीर्णाश्च दृश्यन्ते । एता उष्णकाले विलीनाः [11] सत्यो नदीषु वृष्टिं विना जलमभिवर्धयन्ति ।

1. षट्शताधिकं सहस्रम्. 2. Consisting of at the greatest 300. 3. Consisting of at the least 150. 4. त्रयोविंशतिसहस्रपदोन्नतानि. 5. More than a hundred. 6. एकोनत्रिंशत्सहस्राणि. 7. Feet. 8. द्विशताधिकषोडशसहस्रेभ्यः. 9. Masses of snow. 10. चतुश्शताधिकसप्तदशसहस्रेभ्यः. 11. Melted.

यत एवम् अयं पर्वतो हिमस्य स्थानं भवति, तत उच्यते हिमालय इति। अस्य 'हिमवान्' 'हिमाद्रिः' इत्यपि नामान्तरम्।

एष तुङ्गतया दीर्घतया विस्तारेण वृक्षाणाम् ओषधीनां च सम्पदा प्राण्युपकारेण च सर्वान् पर्वतान् अतिशेते। अतोऽस्य पर्वतराज इति प्रसिद्धिः॥

कार्तस्वराकरः—[1]कारकोरनामा पर्वतः कश्मीरदेशस्योत्तरेण तिष्ठति। अयमेव 'कार्तस्वराकर' इति नाम्ना व्यवहृतः सम्भाव्यते। अस्य दक्षिणत आसन्ने प्रदेशे '[2]बाल्टि' इति व्यपदिश्यमाने कार्तस्वरम् उत्पद्यते।

अस्य शृङ्गाणि बहूनि सन्ति। तेषु मुख्यं शृङ्गम् औन्नत्ये हिमालयस्य प्रधानशृङ्गात् किञ्चिदवरम्। [3]ध्रुवदेशाद् अन्यत्रास्मिन्नेव पर्वते हिमसंहतेः सम्पद् भूयिष्ठा दृश्यते॥

---

1. Modern name 'Karakora' is believed to be a corrupt form of 'कार्तस्वराकर' spoken of by the commentator of विष्णुपुराण. कार्तस्वराकर means 'A mine of gold'. 2. Bolti or Little Tibet. 3. ध्रुवदेशः=Polar region.

सुमाली—'सुलिमान्'[1] इति व्यपदिश्यमानः 'सुमाली' नाम पर्वतः सिन्धुनदस्य पश्चिमतीरे तिष्ठ-ति । अस्माद् उत्तरतः पञ्चनदे[2] रुमण्वान्[3] नाम गिरि-रस्ति । रुमण्वतो रौमक इत्यपि संज्ञा । बहोः कालात् प्रभृति जना अस्माद् गिरेर्लवणं खण्डशो निर्भिद्य गृह्णन्ति ॥

अर्बुदपर्वतः—'अर्बुदपर्वतः'[4] सिन्धुगङ्गयोर्म-ध्ये तिष्ठति । अयं विन्ध्यस्य पश्चिमान्ताद् 'अजमी-रम्'[5] उल्लङ्घ्याभीन्द्रप्रस्थम्[6] अतिदूरम् गच्छति । आ-रोग्यसुखार्थिनां वासयोग्यम् 'आबु'[7] इति स्थानम् अत्रास्ति । अत्र जैनानां देवालया बहवो वर्तन्ते ॥

विन्ध्यः—'विन्ध्यगिरि'र्गुर्जरदेशस्य परिस-

1. 'Suliman'. This seems to be a modified form of सुमालिन् treated by the commentator of विष्णुपुराण. 2. पञ्चनद= Punjab. 3. Salt range. This is identified with the Greek 'Oromanos' (Alexander) and Roumaka (Hewnthsang). The words रुमण्वान् and रौमक are respectively derived from the radicals लवण and रुमा (salt mine). 4. Aravalli mountains 5. Ajmere. 6. Towards इन्द्रप्रस्थ (Delhi). 7. Mt. 'Abu' 8. Of the desert lying near.

रमरोः समीपात् प्रस्थाय गङ्गाया अन्तिके विश्राम्यति । अयं ६००[1] क्रोशान् आयतः समुद्रोपरितलात्[2] २५००[3] पदानाम् उपरि तिष्ठति ।

अत्र निबिडानि वनानि सन्ति । अस्य वालुकोपलप्रायेषु[4] शर्कराप्रायेषु[5] चाधित्यकाभागेषु[6] न वृक्षा प्रोहन्ति ॥

**ऋक्षपर्वतः**—'ऋक्षपर्वतो' विन्ध्याद् दक्षिणतः ५०[7] क्रोशान् आयतः । अस्य शिखराणि द्विशतपदपर्यन्तम् उन्नमन्ति । अयं 'विन्ध्यपाद' इत्युच्यते ॥

**पश्चिमपर्वतश्रेणी**—'पश्चिमपर्वतश्रेणी'[8] क्वचित् स्थले परं पञ्चविंशतिं क्रोशान् विच्छिद्य ४३०[9] क्रोशान् अनुसमुद्रवेलं[10] गच्छति । अस्या औन्नत्यं यथादक्षिणम्[11] अधिकं दृश्यते । अस्याः परमम्[12] औन्नत्यं ७०००[13] पदानि ।

---

1. षट् शतानि. 2. समुद्रोपरितलम्=Sea level. 3. पञ्चशताधिकद्विसहस्रपदानाम्. 4. Abounding in sandstone. 5. Gravelly. 6. In tracts of high land. 7. पञ्चाशतम्. 8. Western Ghats. 9. त्रिंशदधिकानि चतुश्शतानि. 10. Along the sea-coast. 11. South to south. 12. Extreme. 13. सप्त सहस्राणि.

अस्यां 'सह्यो' '[1]नीलगिरिः' 'मलयो' 'महेन्द्र' इत्याद्याः पर्वता निविशन्ते । नीलगिरेरुद्देशा वसतिसुखे प्रसिद्धाः ।

एषा पर्वतश्रेणी सर्वतो वृक्षाणाम् ओषधीनां च सम्पदा चक्षुषोरमितम् आनन्दं जनयति । पश्चिमा चेयं सीमा [2]दक्षिणापथमालस्य ॥

पूर्वपर्वतश्रेणी—'[3]पूर्वपर्वतश्रेणी' दक्षिणापथमालस्य पूर्वा सीमा भवति । एषा न केवलं तुङ्गतायां, प्रायेण सर्वेषु गुणेषु पश्चिमपर्वतश्रेण्या हीयते।

उत्तरतो महेन्द्रमाली दक्षिणतो दर्दरश्च पूर्वपर्वतश्रेण्याम् अन्तर्गतौ ॥

अन्ये पर्वताः—त एते मुख्याः पर्वता निर्दिष्टाः । अन्येऽपि तु पर्वता बहवो भारते तिष्ठन्ति ।

अपिच 'हिन्दुकुष्' इति यः पर्वतो व्यपदिश्यते, स भारताद् बहिरवतिष्ठते । [4]अस्य 'निषध'

1. Nilgiri hills. 2. Of the table-land of Deccan. 3. Eastern Ghats. 4. पर्वतस्य. 5. Paropanishos of the Greeks.

इति पुरातनं नामधेयं केऽपि[1] सम्भावयन्ति[2]। आर्या-णां भारतप्रवेशात् प्राचीनम् अभिजनम्[3] अस्य तटं वदन्ति। अत एष सिन्धूनां हिन्दुशब्दितानां[4] कोशो[5] भवति। तेन 'सिन्धुकोश'[6] इति नामधेयम् अस्य परे[7] ऊहन्ते।

अस्ति हिमालयाद् उत्तरतोऽतिरमणीयसन्नि-वेश ऊर्जितानुभावो गिरिः 'कैलासो'[8] नाम, यस्माद् दक्षिणतः पावनं सरोवरम् उल्लसति 'मानसं'[9] नाम। कैलासं मानसं च देवभोग्यं पुराणानि कथयन्ति॥

---

## नद्यः.

गङ्गा—भारते या नद्यः प्रवहन्ति, तासु अ-भ्यर्हिततमा[10] गङ्गा भवति। एषा भागीरथीनाम्ना[11] हि-

---

1. Some. 2. Believe. 3. Mother-land. 4. Named as Hindu. 5. Store. 6. The name Hindu-kush is believed to be a corrupt form of सिन्धुकोश. 7. Others. 8. Kiunlun range. 9. Lake Manas-sarovar. 10. Greatly respectable. 11. By the name of भागीरथी.

मालये ‘गङ्गावताराद्’[1] आविर्भवति। तत इयम् ‘अ-लकनन्दया’[2] समानप्रभवया समम् ऐक्यं प्राप्नोति। अथ सेवालिपर्वतस्य[3] सानौ लुठन्ती हरिद्वारम्[4] अती-त्योदारगम्भीरेण स्रोतसा वहति।

क्वचिद् अनया दक्षिणपूर्वगामिन्या वामतो[5] ‘रामगङ्गा’ दक्षिणतः[6] ‘काली’ च सङ्गतं प्राप्नुतः।

अस्याः पोषकनदीषु[7] महत्तमा ‘यमुना’[8] गङ्गा-वातारसमीपाद् ‘यमुनावताराद्’[9] आविर्भवति। सा ‘चर्मण्वतीं’[10] ‘सिन्धुनदीं’[11] ‘वेत्रवतीं’[12] ‘कर्णावतीं’[13] च दक्षिणत आदाय प्रयागे[14] गङ्गया सह मिलति। यमु-नोपनदीषु प्रथमां ‘पर्णाशा’[15], द्वितीयां ‘पारा’[16], तृती-यां ‘दशार्णा’[17] च पुष्णन्ति।

---

1. From Gangotri. 2. अलकनन्दा=River Alakananda. 3. सेवालिपर्वतः=Sivalik range. सेवालिशब्दः सुवास्त्वादि (४-२-७७ पाणि.) गणे पठितः. 4. Hardwar. 5. On the left. 6. On the right. 7. Among the tributaries. 8. Jumna River. 9. From Jumnotri. 10. Chambal River. 11. Sindh River. 12. Betwa River. 13. Ken River. 14. At Allahabad. 15. Banas River. 16. Parbati River. 17. Dhasan River.

प्रयागतो गङ्गा पूर्वाभिमुखं प्रवहन्ती 'गोमतीं'[1] 'तमसां'[2] शारदायुक्तां[3] 'सरयूं'[4] 'गण्डकीं'[5] 'कौशिकीं'[6] च वामतो, दक्षिणतः 'शोणं'[7] 'फल्गुनीं' चोपादत्ते । तत्र शारदा सरयूर्गण्डकी कौशिकी च हिमवत उत्पद्यन्ते । शोणो मेकलप्रदेशाद्[8] उत्पद्य कैर्मेदुरगिरे[9]रुपत्यकया[10] प्रवहति । अयं 'हिरण्यबाहुः' इत्यप्याख्यायते ।

अनन्तरं गङ्गा दक्षिणपूर्वया दिशा वहन्ती ब्रह्मपुत्रनदं[11] स्वीकृत्य बहुभिर्मुखैर्वङ्गमहोदधिम् आविशति ।

अस्या दैर्घ्यं सार्धसहस्रक्रोशासन्नं[12] सम्भाव्यते । मुखात् प्रभृति आहरिद्वारम् अस्यां महानौः[13] सञ्चरति ।

---

1. Gumti River. 2. Tons River. 3. Joined with Sarda River. 4. Gogra River. 5. Gandak River. 6. Kusi River. 7. Son River. 8. From a part of Amarakantak (included in the Vindhya Mountains). 9. Of the Kaimur range कैर्मेदुरशब्दः सिन्ध्वादि (४-३-९३ पाणि.) गणे पठितः. 10. उपत्यका = Land at the foot. 11. Brahmaputra River. 12. Near 1500 miles. 13. A ship.

इयं पश्चिमोत्तरदेशेऽयोध्याविषये वङ्गदेशे च स्यन्दते॥[1] [2] [3]

लौहित्यनदः—अस्ति कैलासात् पूर्वतो 'लोहितं' नाम महासरः। तस्माद् नदो 'लौहित्यो' नाम प्रभवति। अयं 'ब्रह्मपुत्र' इति नामान्तरं वहति।

एष सहस्रं क्रोशान् पूर्वाभिमुखं गच्छति। ततो भारतं प्रविश्य प्रथमम् अभिदक्षिणपश्चिमम् अनन्तरम् अभिदक्षिणं प्रवहन् गङ्गामुखेन संसृज्य समुद्रम् अवतरति। अनेन 'करतोया'[4] मिलति।

अस्य दैर्घ्यं १८००[5] क्रोशान् व्याप्नोति। अस्मिन् ८००[6] क्रोशान् अग्निमहानौः[7] सञ्चरति॥

सिन्धुनदः—'सिन्धुनदः' कैलासात् प्रभवति। एष प्रथमं हाटकमार्गेण[8] पश्चिमोत्तराभिमुखः

---

1. पश्चिमोत्तरदेशः=North west Provinces but called now *United* Provinces. 2. अयोध्याविषयः=Oudh. 3. Flows. 4. Karotya River. 5. अष्टशताधिकं सहस्रम्. 6. अष्ट शतानि. 7. Steamer. 8. हाटकं=Laddak.

कश्मीरान् प्रविश्य दूरं गच्छति ; ततो दक्षिणपश्चिमाभिमुखो भूत्वा पञ्चनदस्य पश्चिमं भागं महामरुस्थलीं[1] सिन्धुदेशं[2] च गाहमानः पश्चिमसमुद्रेण समागच्छति ।

अनेन दक्षिणतः काम्बोजनदी[3] कुभा[4] नाम सुवास्तुं[5] नदीम् आदाय संसृज्यते; वामतस्तु पञ्च नद्यो हिमालयप्रभवाः संसृज्यन्ते । 'वितस्ता[6]' 'चन्द्रभागा[7]' 'इरावती[8]' 'विपाशा[9]' 'शुतुद्रिः[10]' इति तासां पञ्चानां नामानि । आसु चरमा मानसात् प्रभवति ।

सिन्धोर्दीर्घता २००० [11] क्रोशान् व्याप्नोति ।

---

1. Great desert (in Rajputana). 2. Sind. 3. कम्बोजाः= Afghanistan. तत्र प्रवहन्ती नदी काम्बोजनदी. 4. Kabul River. This name is supposed to be derived from the Vedic कुभा— 'मा वो रसानितमा कुभा क्रुमुर्मा वः सिन्धुर्निरीरमत् मा वः परिष्ठात् सरयुः पुरीषिण्यस्मे इत् सुम्नमस्तु वः' (अष्ट. ४. अ. ३. व. १२. ऋग्वेदः). 5. The Swat River. This is mentioned in the ऋग्वेद—'उत मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि' (अष्ट. ६. अ. १. व. २९). 6. Jhelum River. 7. Chenab. 8. Ravi River. 9. Beas River. 10. Sutlej River. 11. द्वे सहस्रे.

आमुखात् सिन्धुनदे नौः ९४२[1] कोशान् उत्सर्पति ॥

सरस्वती[2]—'सरस्वत्याः' प्रभवः शुतुद्रियमुनयोर्मध्यवर्ती 'प्लक्षप्रस्रवणो'[3] नाम गिरिः। कुरुक्षेत्र[4]स्योत्तरा सीमास्याः सरणिर्भवति। अस्यां वर्षास्वेव स्रोतो लक्ष्यं भवति। अन्ते चैषा मरुसिकतासु अदर्शनं प्राप्नोति।

अस्याः पावनानि तीर्थानि महर्षिभिर्भक्त्या सेवितानि। अस्या माहात्म्यं महाभारते बलरामतीर्थयात्रायाम् उद्घुष्यते। ऋचोऽप्यस्या महिमानं स्तुवन्ति।

अस्याः सोदर्या 'दृषद्वती'[5] नाम कापि नदी 'हास्तिनपुरात्'[6] पश्चिमोत्तरतो विद्यमानस्य अम्बाला[7]पुरस्य परिसरे प्रवहन्त्यनया संयुज्यते।

अस्त्यन्या सरस्वती[8], यार्बुदाद्[9] उत्पद्य पश्चिमाब्धिम् आविशति ॥

---

1. द्विचत्वारिंशदधिकानि नव शतानि. 2. Saraswati River. 3. This is mentioned in the Mahabharata. 4. Of Thaneswar. 5. Caggar River. 6. हास्तिनपुरम्=Hastinpur. 7. अम्बाला=Ambala. 8. This Saraswati flows through Guzarat. 9. From Aravalli hill.

**लवणी**--'लूनी' इति व्यपदिश्यमाना 'ल[1]वणी' नाम नदी अजमीरासन्नाद् अर्बुदस्य पश्चिमभागात् प्रभवति। तस्य गिरेर्दक्षिणार्धाद् उद्भूतैः प्र[2]स्रवणैरियं परिवर्ध्यमाना कच्छदेशे[3] समुद्रम् आविशति। अस्या जलम् अवर्षासु लवणरसं भवति॥

**ऐरावती**--'ऐरावती[4]' तिबेतशब्दितस्य[5] हिमवदुत्तरदेशस्य दक्षिणपर्वतश्रेण्या आविर्भूय भर्मदेशमार्गेणाभिदक्षिणं प्रवहन्ती पूर्वसमुद्रेण संयुज्यते॥

**नर्मदा**--'नर्मदा' विन्ध्यस्य पूर्वभागेनोपश्लिष्टाद् '[6]अमरकण्टक' इति प्रसिद्धाद् मेकलगिरेराविर्भवति; विन्ध्यस्य दक्षिणपार्श्वे च बहुभिर्निर्झरसम्पातैः पश्चिममुखी प्रवहति। एषा जाबालपुरम्[7] अतीत्य [8]चन्द्रकान्तशिलाप्राये दुर्गमे स्रोतोमार्गे रामणीयकम् [9]आसेचनकं परिगृह्णाति। ततो दूरम् इयम् अभि-

---

1. Loni River. 2. प्रस्रवणानि=Streams. 3. At Cutch. 4. Irawady River. 5. Named as Tibet. 6. Amarakantak. 7. Jabalpur. 8. Abounding in marble-stone. 9. Charming.

पश्चिमं स्यन्दमानापराब्धिना समागच्छति । इयं ८००[1] क्रोशान् दीर्घा भवति ॥

**तापी**—नाम्ना 'तापी'[2] 'तपती' वा नद्यृक्ष-पर्वतात् प्रभवन्ती पश्चिमाब्धिना युज्यते । एषा ४६०[3] क्रोशान् स्यन्दते ।

**महानदी**—'महानदी'[4] रैपुरप्रदेशाद्[5] उत्पद्य प्रथमम् उत्तरपूर्वं, ततः पूर्वं, ततो दक्षिणं, तत उत्कलेषु[6] पूर्वं च पन्थानम् आश्रयन्ती पूर्वाब्धिना संयुज्यते ॥

**गोदावरी**—पश्चिमपर्वतश्रेण्याः पूर्वसानौ 'नासिका'[7] इति प्रसिद्धात् पञ्चवटीवनाद् उत्तरतो गोदावरी[8] प्रादुर्भवति । पूर्वाभिमुखं च सा प्रवहन्ती वङ्गसमुद्रेण सङ्गच्छते । अस्याः स्रोतः ९००[9] क्रोशान् स्यन्दते ॥

---

1. अष्ट शतानि. 2. Tapti River. 3. षष्ट्यधिकानि चतुश्शतानि. 4. Mahanadi River. 5. From Raipur. 6. At Orissa. 7. Nasik. 8. Godaveri River. 9. नव शतानि.

कृष्णवेणी—'कृष्णवेणी'[1] अपरपर्वतभागाद् 'महाबलीश्वरात्'[2] प्रस्थाय 'भीमरथीं'[3] 'तुङ्गभद्रां'[4] च गृहीत्वा महोदधिम् आविशति । अस्याः स्रोतः ७५०[5] क्रोशान् वहति । एषा 'कृष्णा' इत्युच्यते ॥

पिनाकिनी—'पिनाकिनी'[6] 'महिषपुरस्य'[7] पूर्वतो नन्दिदुर्गात्[8] प्रस्थायोत्तरेण पूर्वेण च पथा क्रमशः प्रवहन्ती वङ्गसमुद्रेण सङ्गमं प्राप्नोति । अस्त्यन्या पिनाकिनी, यास्या दक्षिणाहि[9] प्रवहन्ती पूर्वाब्धिम् आविशति ॥

क्षीरनदी[10]—नन्दिदुर्गस्यादूरे 'क्षीरनद्याः' प्रभवो वर्तते । चेन्नपुरस्य[11] पश्चिमतः पूर्वपर्वतश्रेणीभागाद् यानि प्रस्रवणानि स्रवन्ति, तैरेषा परिपुष्टा समुद्रम् अवतरति ॥

---

1. Krishna River. 2. From Mahableswar. 3. Bhima River. 4. Tungabhadra River. 5. पञ्चाशदधिकानि सप्त शतानि. 6. Pennar River. 7. Of Mysore. 8. नन्दिदुर्गः= Nandidurg hill. 9. Far to the south. 10. Palar River. 11. चेन्नपुरम् = Madras.

**कावेरी**—'[1]कावेरी' सह्यपर्वताद् आविर्भूय प्रथमं पूर्वाभिमुखी ततो दक्षिणाभिमुखी पुनः पूर्वाभिमुखी च स्यन्दते। [2]उपश्रीरङ्गपत्तनम् एषा द्विधात्मानं कृत्वा पश्चाद् एकीभवति; अन्ते च बहुभिर्मुखैः पूर्वाब्धिं प्रविशति। एतदीया स्रोतस्सरणिः ४७५[3] क्रोशान् दीर्घा भवति॥

**वेगवती**—'[4]वैगै' इति प्रसिद्धा 'वेगवती' मलयपर्वताद् उद्भूय [5]मधुरापुरद्वारेण पूर्वतो गच्छति। इयम् अन्तर्वाहिनी। अतोऽस्यां प्रायो वर्षास्वेव स्रोतो लक्ष्यं भवति। आराच्च [6]रामसेतोः समुद्रेणैषा सङ्गच्छते। इमां 'कृतमाला' इति 'शिवगङ्गा' इति च वदन्ति॥

**ताम्रपर्णी**—'[7]ताम्रपर्णी' मलयपर्वताद् आविर्भूय पूर्वदिशा प्रवहन्ती पूर्वाब्धिना संयुज्यते। अ-

---

1. Kaveri River. 2. Near Srirangapatam. 3. पञ्चसप्तत्यधिकानि चतुश्शतानि. 4. Vaigai River. 5. Through Madura. 6. रामसेतुः=Adam's bridge. 7. Tambrapurni River.

नया सङ्गतस्य महोदधेस्तलेषु तत इतो मौक्तिकान्यु[1]-त्पद्यन्ते ॥

अन्या नद्यः—तदेवं मुख्या नद्य उपवर्णिताः। आसाम् उपनद्यो[2]ऽन्याश्च नद्यो भारते परश्शताः स्यन्दन्ते। अपि च। भारताद् बहिः पश्चिमवाहिनी या नदी 'ओक्सुस्[3]' इति प्रथते, सा विष्णुपुराणोक्ता वक्षुः सम्भाव्यते ॥

## सरांसि.

कश्मीरदेशे[4] राजस्थाने[5] कच्छदेश[6] उत्कलेषु[7] च महासरांसि वर्तन्ते ॥

---

## जनपदा[8] नगराणि[9] च.

कश्मीराः—'कश्मीर'नामा जनपदो भारतस्योत्तरसीमायाम् अस्ति। अत्र कुंकुमं[10] तथा भूयि-

1. Pearls. 2. Tributaries. 3. Oxus River. 4. In Kashmir (Wala Lake). 5. In Rajputana (Sambhar = शाकम्भरी Lake). 6. In Cutch (Ran of Cutch). 7. In Orissa (Chilka Lake). 8. Countries. 9. Towns. 10. Saffron.

ष्ठम् उपजायते, यथा देशनामतस्तस्य काश्मीरम् इति नामधेयं निष्पन्नम् । अत्र 'श्रीनगरम्'[1] इति नाम्ना प्रधानं पुरम् उल्लसति । कश्मीरराज्यं हिन्दुना राज्ञा पाल्यते ॥

**गन्धाराः**—'गन्धारदेशः' सिन्धोरपरतीरे कश्मीरदेशात् पश्चिमतः सन्निविशते[2] । अत्र पुरुषपुरं[3] पुष्करावतं[4] च प्रधाननगरम् आसीत् । दुर्योधनस्य मातुलो भारतप्रसिद्धः शकुनिरत्र राजाभवत् । अत्र व्याकरणकर्तुः पाणिनिमुनेर्जन्मभूमिः 'सैलातुरं'[5] वर्तते । अस्माद् उत्तरतः 'सुवास्तुदेशः'[6] ॥

**पञ्चनदः**—'पञ्चनददेशः' कश्मीरदेशाद् दक्षिणतोऽस्ति । अत्र पञ्च नद्यो वितस्तादयः स्यन्दन्ते । अतोऽयं देशः पञ्चनद उच्यते ।

सिन्धुषष्ठानाम् आसाम् अन्तरालेषु कुलूताद[7]यो बहवो जनपदा विद्यन्ते । 'लवपुरं'[8] 'कुशपुरं'[9]

---

1. Srinagar. 2. Is situated. 3. Peshawar. 4. Hashtanagar. 5. Lahor. 6. The country of Swat. 7. कुलूताः मद्राः आरट्टा यौधेयाः (आयुधजीविदेशाः) etc. कुलूताः=Kulu. 8. Lahore. 9. Kusawar.

'तक्षशिला'[1] 'मूलस्थानम्'[2] इति प्रसिद्धानि नगराण्यत्र वर्तन्ते ॥

ब्रह्मावर्तः—दृषद्वत्याः सरस्वत्याश्चान्तरालदेशो 'ब्रह्मावर्त'[3] उच्यते। अस्य ब्रह्मावर्तसंज्ञा ब्राह्मणानाम् अत्र पुनः पुनर्जननाद् वा समन्ताद् वर्तनाद् वा सिद्धा।

पञ्चनदवासाद् अनन्तरम् अत्रैव जरत्तमार्या[4]णां वासोऽभवत् ॥

ब्रह्मर्षिदेशः—ब्रह्मावर्ताद् अनन्तरो 'ब्रह्मर्षिदेश' उच्यते। अत्र 'कुरुक्षेत्रं'[5] 'पञ्चालाः' 'शूरसेना' 'मत्स्या'श्चान्तर्भवन्ति ॥

कुरुक्षेत्रं—वामतः सरस्वत्या बहुक्रोशविस्तीर्णा या समभूमिरस्ति, तत् 'कुरुक्षेत्रम्' इति वदन्ति;

1. Taxilla. 2. Multan. 3. 'सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥' (मनुः). 4. जरत्तमार्याः=Aryan fore-fathers. 5 'कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनकाः। एष ब्रह्मर्षिदेशः स्याद् ब्रह्मावर्तादनन्तरः ॥' (मनुः). 6. Thaneswar.

'कुरुजाङ्गलम्' इति च। अत्र कुरुपाण्डवानां महद् युद्धम् अवर्तत।

अत्र कमपि महान्तं शिवालयं परितः कानिचित् सरांसि वर्तन्ते, येषां समुदायः 'समन्तपञ्चकम्' इत्युच्यते। तच्च परशुरामेण निर्मितम् इतीतिहासोऽस्ति। तस्माद् अनतिदूरे द्वैपायनह्रदो भारतप्रसिद्धो विद्यते। ह्रदस्यासन्ने सरस्वती तनीयसा स्रोतसा वहति। भद्रकालीक्षेत्रं च प्रसिद्धं तत्र विद्योतते।

कुरुक्षेत्रं स्वात्मन्यन्तर्भावयन् देशः 'कुरुदेशो' भवति। तच्च पाण्डवानां राज्यम्। तत्र 'स्थाण्वीश्वरं'[1] हास्तिनपुरं[2] 'पाणिप्रस्थम्'[3] 'इन्द्रप्रस्थम्' इति नगराणि प्रसिद्धानि।

कुरुजाङ्गलेनोपलक्षितो जनपदः 'श्रीकण्ठ'[4] इति कदाचिद् व्यवहृतः[5], यत्र 'स्थाण्वीश्वरं' प्रधाननगरम् आसीत्॥

पञ्चालाः—कुरुदेशाद् अनन्तरः पञ्चाल-[6]

1. Thanswar (Town). 2. Hastinpur. 3. Panipat 4. Sarhind. 5. अयमर्थो हर्षचरिते स्पष्टः. 6. Rohilkhand.

देशः । स 'दक्षिणपञ्चालाः' 'उत्तरपञ्चालाः' इति द्विधा विभक्त आचर्मण्वत्या वितत आसीत् । कान्य-[1]कुब्जम् अत्रान्तर्भूतम् । इमं देशं पाण्डवानां श्वशुरो[2] द्रुपदः पालयामास । उत्तरपञ्चालेषु 'अहिच्छत्रा' राजधानी; दक्षिणपञ्चालेषु 'काम्पिल्यम्[3]' । हरिद्वा-रात् पूर्वतोऽलकनन्दाया वामतो ब्रह्मपुरराज्यम्[4] अस्ति ॥

शूरसेनाः—'शूरसेनदेशः' श्रीकृष्णस्य जे-न्मस्थानम्[5] । 'गोकुलं' 'बृन्दावनं[6]' 'मथुरा[7]' 'अग्र-[8]वणम्' इति नगराण्यनेन सम्बद्धानि ।

श्रीकृष्णस्य मातुलस्तेन निहतः कंसो नाम राजा मथुराम् इमां राजधानीं चकार ॥

मत्स्याः—'मत्स्यदेशो' विराटस्य राज्ञो रा-ज्यं, यत्र पाण्डवा वर्षमेकम् अज्ञातवासम् अकुर्वन् । 'मच्छरि[9]' इति प्रसिद्धा मत्स्यपुरी तस्य राजधानी सम्भाव्यते ॥

---

1. Kanouj. 2. Father-in-law. 3. Kampil. 4. Kuma . 5. Birth place. 6. Brindavan. 7. Muttra. 8. Agra. 9. Machheri. (Alwar state).

**उत्तरकोसलाः**— स 'कोसलदेशो', यत्र 'अयोध्या'[1] 'शेरावती'[2] इति प्रसिद्धे नगरे; 'लक्ष्मणपुरी'[3] च। अत्र गोमती सरयूस्तमसेति नद्यो वहन्ति। इदं दिलीपादीनां सूर्यवंश्यानां राज्यम् आसीत्। श्रीरामः स्वर्गम् आरोक्ष्यन् स्वसूनुं लवं शरावत्यां राजानं निवेशयामास; कुशं च कुशावत्यां 'दक्षिणकोसलेषु'। 'विदर्भदेशं'[4] च दक्षिणकोसलान् वदन्ति॥

**नेपालाः**—'नेपालदेशो'[5] हिमालयस्य सानौ वर्तते। अत्र पावनी गण्डकी नाम नदी वहति, या सालग्रामशिलानां महार्घाणाम् आकरः। अत्र बुद्धमुनेर्जन्मभूमिः 'कपिलवस्तु' नाम महानगरं सन्निविष्टम्॥

**विदेहाः**—याज्ञवल्क्यमहर्षेः शिष्यो ब्रह्मज्ञानीति य उपनिषत्सु श्रूयते जनको नाम, तस्य 'विदेहदेशो' राज्यम् आसीत्। एष नेपालदेशाद् दक्षि-

1. Oudh. 2. Sahet Mahet. शरावती श्रावस्तीत्यप्युच्यते.
3. Lucknow. 4. Berar. 5. Nepal.

णतो निविशते । सम्प्रति नेपालेष्वन्तर्गता ' जनक-[1] पुरी ' अस्य राजधानी सम्भाव्यते ॥

**वत्सदेशः**—स ' वत्सदेशः ' यत्र ' उदयनो '[2] नाम राजा बभूव । तस्य राजधानी कौशाम्बी[3] । तस्या नातिदूरे ' प्रयागो'ऽस्ति ॥

**काशयः**—स ' काशिदेशो ' नाम, यत्र महा-नगरी वाराणसी[4] सन्निविष्टा । वाराणस्याः ' काशी ' इत्यपि नामधेयम् अस्ति । एषात्युत्तमं पुण्यस्थलम्[5] आर्याणाम् ।

इयं पुरा सर्वासां विद्यानां मतानां च मुख्यं प्रवचनस्थानम्[6] आसीत् ॥

**मगधाः**—' मगधदेशो[7] ' गङ्गाया दक्षिणतो-ऽस्ति । अत्र ' गिरिव्रजं[8] ' ' पाटलीपुत्रं[9] ' च प्रधानन-गरे । ' गया ' ' उरुविल्वम्[10] ' इति चात्र नगरे, ये बुद्धमुनिरध्युवास ॥

---

1. Janakpur. 2. अयं कथासरित्सागरे वर्ण्यते. 3. Kosam about 30 miles above Allahabad. 4. Benares. 5. Sacred place. 6. उपदेशस्थानम्. 7. Behar. 8. Rajgir. 9. Patna 10. Buddhagaya.

अङ्गाः—मगधदेशात् पूर्वतोऽङ्गदेशः । अत्र प्रधाननगरी 'चम्पा' [1]भगल्पुरसमीपेऽस्ति । अत्र रामायणप्रसिद्धो रोमपादो भारतप्रसिद्धः कर्णश्च राजा बभूव ॥

सुह्माः—स 'सुह्मदेशः', यत्र '[2]कपिशानद्याः' दक्षिणतीरे निविष्टा '[3]ताम्रलिप्ती' राजधानी बभूव ॥

वङ्गाः—सुह्मदेशात् पूर्वतो 'वङ्गदेशो'ऽस्ति, यत्राद्यत्वे '[4]कालिघट्टपुरी' भारतचक्रवर्तिनो भारतराजधानी प्रख्यायते । अस्य 'समतटम्' इत्यपि संज्ञा । अत्र गङ्गा सागरेण समागमं प्राप्नोति । अत्र '[5]कर्णसुवर्ण' नाम प्रधाननगरम् आसीत् ॥

पुण्ड्राः—वङ्गदेशाद् उत्तरः '[6]पुण्ड्रदेशः' । अयम् 'गौडदेश' इत्यप्याख्यातः ॥

कामरूपम्—वङ्गदेशात् पूर्वोत्तरः 'कामरूपं' नाम देशोऽस्ति, यत्र हर्षवर्धनस्य मित्रं [7]भास्करवर्मा

---

1. Bhagalpur. 2. कपिशानदी=Kossya. 3. Tamlook. 4. Calcutta. 5. Kansona. 6. Northern Bengal. 7. अयं हर्षचरिते वर्णितः.

राजाभवत् । महाभारतसमयेऽस्य राज्यस्य भगदत्तो राजा बभूव । भगदत्तस्य 'चीना'[1] हिमालयपादस्थाः किराताश्च वशेऽभवन् । तैः सहितम् एनम् अर्जुनो जिगाय । अस्य राजधानी 'प्राग्ज्यौतिषं' नाम ॥

**भर्मदेशः**—भारतस्य पूर्वसीमायां 'भर्मदेशो'ऽस्ति । स देशः 'सुवर्णभूमिः' इत्युच्यते । एष धान्यानां भवनैः[2] क्षेत्रै रत्नानाम् आकरैश्चोपसम्पन्नश्चकास्ति । अस्य राजधानी 'अमरपुरम् ॥

**निषधाः**—सिन्धुनद्यास्तीरे निषधदेशः । तस्य 'नर्वार्'[3] इति व्यपदिश्यमानं 'नलपुरं' राजधानी सम्भाव्यते । अत्र भारतप्रसिद्धो नलो नाम राजा राज्यमशिषत् ॥

**चेदिदेशः**—'चन्दरी'[4] इति सम्प्रति मालवेषु विदितां पुरीं 'चेदिपुरीं' वदन्ति । तेनोपलक्षितो देशः 'चेदिदेशो' भवति । अत्र श्रीकृष्णस्पर्धी शिशुपालो राजा बभूव ॥

---

1. Chinese. 2. उत्पत्तिस्थानैः. 3. Narwar. 4. Chandali.

**मालवाः**—स 'मालवदेशो'[1], यत्र उज्जयिनी[2] दशपुरं[3] च नगरे; धारा[4] च। अस्य 'अवन्तिदेश' इति नामान्तरम् अस्ति। उज्जयिनी चावन्तिपुरीत्युच्यते। उज्जयिनी पुरा ग्रहपरीक्षकैः खमध्यस्थानं[5] कल्पितम् आसीत्।

उज्जयिन्यां प्रख्यातं शिवक्षेत्रम् अस्ति, यत्र देवो महाकालनाम्ना प्रथते॥

**दशार्णाः**—मालवानां पूर्वे भागं दशार्णदेशं वदन्ति। अस्य राजधानी वेत्रवत्यास्तीरे 'विदिशा'[6] इति नाम्ना बभूव॥

**सौराष्ट्राः**—'सौराष्ट्रदेशो'[7] मालवदेशात् पश्चिमतोऽस्ति। अयम् अद्यत्वे 'गुर्जरदेश' इत्युच्यते। इदं श्रीकृष्णस्य राज्यम् आसीत्। अत्र 'द्वारका' नाम नगरी विद्यते। अस्या दक्षिणपूर्वत उपशतक्रोशदूरे पुरातनी द्वारकापुरी आसीत्। इयं 'द्वारावती' इत्यपि कथ्यते। इदं नगरं देशस्यानर्तसंज्ञया 'आनर्तनगरम्' इत्यप्याख्यातं बभूव।

1. Malwa. 2. Oujain. 3. Dholpur, on the Chambal. 4. Dhar. 5. Meridian. 6. Bilsa. 7. Guzarat.

राजाभवत् । महाभारतसमयेऽस्य राज्यस्य भगदत्तो राजा बभूव । भगदत्तस्य ‘चीना’[1] हिमालयपादस्थाः किराताश्च वशेऽभवन् । तैः सहितम् एनम् अर्जुनो जिगाय । अस्य राजधानी ‘प्राग्ज्यौतिषं’ नाम ॥

**भर्मदेशः**—भारतस्य पूर्वसीमायां ‘भर्मदेशो’-ऽस्ति । स देशः ‘सुवर्णभूमिः’ इत्युच्यते । एष धान्यानां भवनैः[2] क्षेत्रै रत्नानाम् आकरैश्चोपसम्पन्नश्चकास्ति । अस्य राजधानी ‘अमरपुरम् ॥

**निषधाः**—सिन्धुनद्यास्तीरे निषधदेशः । तस्य ‘नर्वार्’[3] इति व्यपदिश्यमानं ‘नलपुरं’ राजधानी सम्भाव्यते । अत्र भारतप्रसिद्धो नलो नाम राजा राज्यमशिषत् ॥

**चेदिदेशः**—‘चन्दरी’[4] इति सम्प्रति मालवेषु विदितां पुरीं ‘चेदिपुरीं’ वदन्ति । तेनोपलक्षितो देशः ‘चेदिदेशो’ भवति । अत्र श्रीकृष्णस्पर्धी शिशुपालो राजा बभूव ॥

---

1. Chinese. 2. उत्पत्तिस्थानैः. 3. Narwar. 4. Chandali.

**मालवाः**—स 'मालवदेशो'[1], यत्र उज्जयिनी[2] दशपुरं[3] च नगरे; धारा[4] च। अस्य 'अवन्तिदेश' इति नामान्तरम् अस्ति। उज्जयिनी चावन्तिपुरीत्युच्यते। उज्जयिनी पुरा ग्रहपरीक्षकैः खमध्यस्थानं[5] कल्पितम् आसीत्।

उज्जयिन्यां प्रख्यातं शिवक्षेत्रम् अस्ति, यत्र देवो महाकालनाम्ना प्रथते॥

**दशार्णाः**—मालवानां पूर्वे भागं दशार्णदेशं वदन्ति। अस्य राजधानी वेत्रवत्यास्तीरे 'विदिशा'[6] इति नाम्ना बभूव॥

**सौराष्ट्राः**—'सौराष्ट्रदेशो' मालवदेशात् पश्चिमतोऽस्ति। अयम् अद्यत्वे 'गुर्जरदेश'[7] इत्युच्यते। इदं श्रीकृष्णस्य राज्यम् आसीत्। अत्र 'द्वारका' नाम नगरी विद्यते। अस्या दक्षिणपूर्वत उपशतक्रोशदूरे पुरातनी द्वारकापुरी आसीत्। इयं 'द्वारावती' इत्यपि कथ्यते। इदं नगरं देशस्यानर्तसंज्ञया 'आनर्तनगरम्' इत्यप्याख्यातं बभूव।

1. Malwa. 2. Oujain. 3. Dholpur, on the Chambal. 4. Dhar. 5. Meridian. 6. Bilsa. 7. Guzarat.

अत्र 'रैवतकगिरि'स्तिष्ठति । विश्रुतं 'प्रभासतीर्थं' '[1]सोमनाथक्षेत्रं' चात्र विद्योतेते । आसीद् अत्रान्या च राजधानी '[2]वलभिः' इति, या 'बलभद्रपुरी' इत्युच्यते ॥

**लाटाः**—नर्मदायाः पश्चिमतो 'लाटदेशः' । [3]बटोदरपुरराज्यं हिन्दुराजपालितं तत्रान्तर्भूतं वदन्ति ॥

**राजस्थानम्**—यो गुर्जरदेशात् पश्चिमोत्तरो '[4]मरुवारो' वर्तते, तेनार्बुदेन च संसृष्टं '[5]राजस्थानं' भवति । तत्रान्तर्गतानि [6]जयपुरादीनि राज्यानि [7]राजपुत्रजातीया राजानः पालयन्ति । अर्बुददेश्या '[8]अर्बुदा' इति व्यवहारम् अर्हन्ति ॥

**सिन्धुदेशः**—'[9]सिन्धुनदमुखस्य भूमय आसन्नमरुभागाश्च सिन्धुदेशेऽन्तर्भवन्ति । भारतप्रसिद्धस्य धृतराष्ट्रस्य जामाता जयद्रथः सिन्धुदेशम् अशिषत् । अत्र [10]पाटलपुरं प्रधाननगरम् ।

1. Somanath. 2. Walabi (north-west of Bhownaggar). 3. Baroda. 4. Marwar. 5. Rajaputana. 6. (जयपुरम्) jaipur. आदिर्येषां तानि. 7. Rajaputs. 8. अर्बुदपर्वतसमीपदेशो येषाम् अभिजनः, तेषाम् अर्बुदसंज्ञा. 9. Sind. 10. Hyderabad.

अस्य देशस्य सम्बन्धाद् अश्वस्य सैन्धव इति संज्ञा निष्पन्ना ॥

**हैहयाः**—'हैहयदेशो' नर्मदासम्बद्धो मालवदेशाद् दक्षिणतोऽस्ति । अत्र नर्मदायास्तीरे 'माहिष्मती'[1] नाम राजधानी बभूव ॥

**विदर्भाः**—'विदर्भराज्यं'[2] पुरा कृष्णाकूलात् प्रभृति आनर्मदातीराद् विततम् आसीत् । इदं महत्त्वाद् 'महाराष्ट्रम्'[3] इति व्यवहृतम् ।

कोङ्कणावधिकात्[4] पश्चिमपर्वतभागात् पूर्वः साम्प्रतिकाद् विदर्भदेशात् पश्चिमो देशोऽधुना 'महाराष्ट्रम्' उच्यते ।

विदर्भेषु प्रधाननगरं 'विदर्भपुरम्' इति 'कुण्डिनपुरम्' इति चोच्यते । तच्च सम्प्रति 'विंदर्'[5] इति प्रतीतं सम्भाव्यते ॥

**उत्कलाः**—ताम्रलिप्त्या दक्षिणत आकपिशानदि 'उत्कलदेशो'[6] विततोऽस्ति । अयम् 'ओड्-

1. Maheswar. 2. Berar. 3. Maratta. 4. कोङ्कणा अवधिर्यस्य तस्मात्. 5. Beder. 6. Orissa.

देशः' इत्युच्यते । अत्र समुद्रवेलायां 'पुरी'[1] इति नगरम् अस्ति । अत्र पुण्यं जगन्नाथक्षेत्रम् उल्लसति । अस्य समीपे 'भुवनेश्वरम्' अस्ति, यत्र शिवक्षेत्रम् उल्लसति ॥

**कलिङ्गाः**—उत्कलदेशाद् दक्षिणतः 'कलिङ्गदेशः'[2] । अस्य 'कलिङ्गनगरम्' इति राजधानी समुद्रवेलाया अनतिदूर आसीत् । अस्मिन् देशेऽन्तर्गतो महेन्द्रमाली गिरिः ॥

**अन्ध्राः**—'अन्ध्रदेशः' कलिङ्गदेशाद् अनन्तरो गोदावरीकृष्णयोर्मध्ये निविशते । अस्य राजधानी 'अन्ध्रनगरम्' आसीत् । तच्चाद्यत्वे 'वेङ्गी'[3] इति प्रसिद्धं सम्भाव्यते । भाग्यपुरराज्ये'[4]ऽयं देशो भूयिष्ठम् अन्तर्भवति । तच्च महम्मदीयो राजा पालयति । तस्य राजधानी 'भाग्यपुरम्'[5] इत्युच्यते ।

त्रैलिङ्गदेशोऽप्यन्ध्रदेशेऽन्तर्गतः । त्रीणि शिव-

---

1. Puri Jagannath. 2. Northern sircars. 3. Vengi or Vegi.
4. भाग्यपुरराज्यम्= Hyderabad state. 5. Hyderabad.

लिङ्गानि तस्मिन् देशे प्रसिद्धानि सन्ति। अतः स देशः 'त्रैलिङ्ग' इति व्यवहृतः। तम् एनम् अन्ध्रदेशम् अधुना 'तैलिङ्गदेश' इति व्यवहरन्ति॥

कुन्तलाः—गोदावरीतीरे 'कुन्तलदेशः' सन्निविष्टः। अस्य प्रधानं नगरं 'प्रतिष्ठानं'[1] नामासीत्। अत्र सुगृहीतनामा शातवाहनो[2] राजाभवत॥

कर्णाटाः—अन्ध्रदेशाद् दक्षिणतः 'कर्णाट[3]देशः'। वनवासिदेश इति व्यवहृतो 'महिषकदेश'[4]स्तत्रान्तर्गतः। महिषकदेशम् अद्यत्वे 'महीशूरराज्यम्' इति व्यवहरन्ति। अत्र प्रधाननगरं 'महिष[5]पुरं' 'श्रीरङ्गपत्तनं'[6] च। शातवाहनवंश्या इति प्रतीता राजान इदं पालयन्ति। एभिराद्रियमाणं महिषासुरमर्दनीक्षेत्रम् अस्य नगरस्य समीपे वर्तते॥

द्रमिलाः—'द्रमिलदेशः' कर्णाटदेशाद् अनन्तरोऽस्ति। अत्र 'चौलमण्डलवेला'[7] पूर्वपर्वतश्रेण्या आसन्नपश्चिमभागाश्च केचिद् अन्तर्भवन्ति। काञ्ची[8]-

1. Paithan. 2. Salivahana. 3. Karnatic. 4. Mysore state. 5. Mysore. 6. Seringapatam. 7. Coromandal coast. 8. Conjeeveram.

पुरम् अस्य प्रधाननगरम् आसीत् । अत्र चेन्नपुरं[1] नागपुरं[2] च पूर्ववेलाम् उपश्लिष्य स्थिते ॥

चेराः—'चेरदेशः' 'कोयम्पुत्तूरविषयम्[3] आत्मन्यन्तर्भावयन् केरलान् स्पृशति ॥

पाण्ड्याः—चोलदेशाद् दक्षिणपश्चिमः पाण्ड्यदेशः । तत्र राजधानी 'मणलूरपुरम्[4]' आसीद् 'मधुरा[5]' च ।

तान् इमांश्चोल-चेर-पाण्ड्यान् अविशेषेण द्रमिलदेश इति जना अद्यत्वे व्यवहरन्ति, यत एषु द्रमिलभाषा भूम्ना प्रचरति ॥

कोङ्कणाः—अनुपश्चिमसमुद्रवेलं 'कोङ्कणदेशः[6]' सन्निविष्टः । 'सूर्यपत्तनं[7]' 'महाम्बापुरं[8]' 'के-[illegible]गपुरं' च तत्रोल्लसन्ति । कल्याणपुरं[9] याज्ञवल्क्य-[illegible]तव्याख्यातुर्विज्ञानेश्वरस्याभिजनः ॥

केरलाः—'केरलदेशः[10]' कोङ्कणदेशाद् अन-

---

1. Madras. 2. Nagpur. 3. Coimbatore. 4. Manalore. 5. Madura. 6. Konkan. 7. Surat. 8. Bombay. 9. Kalyan. 10. Malabar.

न्तरोऽनुपश्चिमवेलम्[1] अस्ति । अस्योत्तरा सीमा 'गोकर्णक्षेत्रं'; दक्षिणा सीमा कुमारीक्षेत्रम्[2] ।

कोङ्कणदेशः केरलदेश इत्युभयमपि परशुरामेण सृष्टम् । अतस्तत् 'परशुरामक्षेत्रम्' इति व्यपदेशम् अर्हति ।

दक्षिणकेरलेष्वन्तिमं[3] राज्यं 'वञ्चिमण्डलम्'[4] इत्युच्यते, यत् कुलशेखरनामानः क्षत्रिया राजानः पालयन्ति । वञ्चिमण्डलस्य राजधानी 'अनन्तशयनम्'[5] । भारतवर्षस्य दक्षिणम् अञ्चलं कुमारीक्षेत्रं राज्येऽस्मिन्नुद्द्योतते । तत्र विश्रुतं कन्याम्बायाः[6] क्षेत्रम् अस्ति ॥

**रामेश्वरद्वीपः**—'रामेश्वरद्वीपो'[7] भारतलङ्कयोर्मध्ये वर्तते । आसन्नश्चायं महोदधिवेलायाः । अत्र 'रामेश्वरं' नाम तनु नगरं विद्यते, यत्र प्रसिद्धं रामनाथक्षेत्रम् अस्ति ॥

---

1. Along the western coast. 2. Cape Comorin. 3. अन्ते भवम्. 4. Travancore. 5. Trivandrum. 6. कन्याम्बा= Goddess Kanya. 7. Rameswaram Island.

सिंहलद्वीपः—'सिंहलद्वीपः'[1] कुमार्याः पूर्वतः समुद्रमध्ये वर्तते। अयं 'लङ्काद्वीप' इत्यपि कथ्यते। अत्र रोहणाद्रिस्तिष्ठति,[2] यं रत्नोत्पत्तिस्थानम् आहुः। श्रीरामेण कृतेति प्रतीता सेतुरेखा[3] भारतलङ्कयोर्मध्ये दृश्यते।

अस्त्यत्र 'निकुम्भिला'[4] नाम प्रदेशः, यत्र लक्ष्मणो रावणिं[5] जिगाय। तत्समीपवर्तिनः पुरस्य 'कुलम्ब्'[6] इति संज्ञा निकुम्भिलाशब्दस्य विकारः[7] सम्भाव्यते॥

देशान्तराणि—इत्थं प्रधानभूता देशाः प्रायेण निर्दिष्टाः। ये देशा जम्बूद्वीपे[8] भारताद् बहिरवतिष्ठन्ते, तेष्वपि कांश्चित् प्राचीनैरार्यैः सम्यग् विदितान् जानीमः।

ते च दक्षिणाहि[9] 'यवद्वीपः'[10]; पश्चिमतो 'वैनायवः'[11] 'काम्बोजाः'[12] 'पारसीकाश्च'[13]; पश्चिमोत्त-

1. Ceylon. 2. Adam's Peak. 3. Adam's Bridge. 4. Negambo. 5. Son of Ravana. 6. Colombo. 7. Corrupt form. 8. जम्बूद्वीप=Asia. 9. Far to the south. 10. Java. 11. Arabia. 12. Afghanistan. 13. Persia.

रतः '[1]शकस्थानं' '[2]तुरुष्कस्थानं' च; उत्तरपूर्वतः [3]चीनदेशः। एषु पाश्चात्या देशा उत्तमाश्वानां प्रभवाः प्रसिद्धाः ॥

पुण्यस्थलानि--उक्तान् पर्वतनदीदेशान् [4]भूयिष्ठान् आर्याः पुण्यस्थलानि मन्यन्ते। अतस्तेषां तत्सेवा न केवलं मनोदेहयोः सौख्याय; किन्तु पुण्यायाप्युपकल्पते। पुण्यस्थलेषु च के[5]दारक्षेत्रं, [6]बदरिकाश्रमो हरिद्वारं, काशीत्यादिकम् अभ्यर्हिततमं तैर्थ[7]यात्रिकाः प्रतियन्ति ॥

## कृषयो [8]लोहा रत्नानि च.

भारते सर्वविधानि धान्यान्योषधयश्च समृध्यन्ते।

[9]अयो बहुत्रोत्पद्यते। [10]सीसं [11]ताम्रं च हिमालये जायते। चन्द्रशिला राजस्थाने लभ्यते। [12]बुन्दि-

1. Bactria. 2. Turkistan. 3. China. 4. Most. 5. Kedar. 6. Badrinath. 7. Pilgrims. 8. Metals. 9. Iron. 10. Lead. 11. Copper. 12 Bundelkhand.

ल्खण्डे हीरमणेर्मर्मदेशोऽन्येषां रत्नानां चोत्पत्तिर्दृश्यते। महीशूरराज्येऽन्यत्र च सुवर्णम् उद्भवति ॥

## शीतोष्णस्थितिः.

भारते केचिद् देशाः शीताः; केचिद् उष्णाः केचिच्चानुष्णाशीताः सन्ति। अतः शीतिमोष्मा वा जनेन यथाकामम् अनुभवितुं शक्यते ॥

## साम्प्रतिको भारतविभागः.

तदिदं भारतखण्डं नेपालवर्जं षोडशभिर्नीवृद्भिर्विभक्तम् आङ्गलसाम्राज्येन। तेषु च चतुश्शताधिकानि उपवर्तनानि कल्पितानि ॥

## जनसङ्ख्या भाषाश्च.

भारतवास्तव्यानां जनानां सङ्ख्याशीतिलक्षाधिकाः षड्विंशतिः कोटय इति सम्भाव्यते।

---

1. हीरमणिः=Diamond 2. आङ्गलसाम्राज्यम्=The Empire of the English. 3. Districts. 4. 26,80,00,000. (268 millions). Increased to 29,60,00,000. as per census of 1901.

सम्प्रति भारते शताधिका[1] भाषाः प्रचरन्ति ।

## मतानि.

भारते प्रचरत्सु मतेष्वार्यमतं बुद्धमतं क्रिस्तुमतं महम्मदमतं च प्राधान्यं भजन्ति । एतेषु च भूयिष्ठैर्जनैरार्यमतं परिगृहीतम् ॥

इति भारतानुवर्णने

भूप्रकरणम् ॥



1. More than one hundred.

|| श्रीः ||

# भारतानुवर्णनम् ।

## पुरावृत्तप्रकरणं नाम द्वितीयो भागः ।

उपोद्घातः—भारते हिन्दवस्तुरुष्का[1] यौरोपा[2] अन्ये च जनाः प्रतिवसन्ति । तेषु हिन्दवो भूयिष्ठाः । हिन्दवश्चार्या इति पूर्वम् अवोचाम ।

तद् इदम् भारतखण्डम् इदानीम् आङ्गलो[3] राजा शास्ति[4] । अस्मिन्नन्तर्गतान् कांश्चिद् देशान् हिन्दवस्तुरुष्काश्च राजान आङ्गलानां साम्राज्यस्या[5]धि[6]श्वराः सन्तः पालयन्ति ।

आङ्गलानां साम्राज्यात् प्राक् षट् शतानि वर्षाणां महम्मदीया[7] भारतम् उपभुञ्जते स्म । ततः पूर्वं तु वर्षाणां सहस्राणि भारतम् आर्येष्वधीनं बभूव ।

तेषाम् एतेषाम् आर्याणां चरितम् आदितः प्रभृति आ महम्मदीयानां भारतप्रवेशाद् न कुत्रापि ग्रन्थेऽनुक्रमेण तत्त्वतो निर्दिष्टम् । किन्त्वाधुनिकै-

---

1. This word is generally applied to the Mahamadans. 2. Europeans. 3. English. 4. Rules. 5. साम्राज्यम्= Empire. 6. Subdued. 7. Mahamadans.

यौरोपैः पण्डितैस्तदनुगामिभिश्च भाषाणां स्वभावं प्राचां संस्कृतग्रन्थानां वस्तुगतिं शिलालेखां[1]स्ताम्रशासनानि[2] विदेशचरितानि[3] चावलम्ब्य कयापि रीत्या तेषां पुरावृत्तम् अनुमितम् अस्ति । तदत्र संक्षिपामः । बुद्धजन्मनो[4]ऽर्वाचीनानां[5] वृत्तानां यथायथं कालं च निर्दिशामः ॥

## कालविभागः.

आर्याणां भारतप्रवेशात् प्रभृति आ महम्मदीयाक्रमणात् ३१६०[6] वत्सरान् कालं कल्पयन्ति चरितचिन्तकाः ।

स च काल एवं विभज्यते—११०१[7] तमादि १७०१[8] तमान्तं कलिवर्षजातं वेदकालः; १७०१ तमादि २१०१[9] तमान्तं ब्राह्मणकालः; २१०१ तमादि

1. Inscriptions on stones. 2. Inscriptions. on copper plates. 3. History by foreigners. 4. बुद्धजन्म=Birth of Buddha. 5. Posterior. 6. षष्ट्यधिकशतोत्तराणि त्रिसहस्राणि. 7. एकाधिकशतोत्तरसहस्रतमादि. 8. एकाधिकसप्तशतोत्तरसहस्रतमान्तम्. 9. एकाधिकशतोत्तरद्विसहस्रतमान्तम्.

२८५९[1] तमान्तं तत्त्वदर्शनकालः; २८५९ तमादि ३६०१[2] तमान्तं बुद्धमतकालः; ३६०१ तमादि ४०५९[3] तमान्तं पुराणकाल इति।

कलिवर्षस्यारम्भः क्रिस्तुजन्मनः प्राचीनेभ्यः ३१०२[4] वर्षेभ्यः प्राग् गण्यते। वर्तमानं कलिवर्षं ५००५[5] तमम्॥

# आर्याणां भारते प्रवेशः.

इह किल सर्वासु भाषासु बहूनां पदानां[6] समानेऽर्थे संवादाद्[7] मानवानाम् आदिमं जन्मस्थानम् एकम् एव भवितुमर्हति। तच्च योग्यतया जम्बूद्वीपस्य मध्यदेश इति पण्डिता ऊहन्ते।

पुरा मानवेषु केचिज्जम्बूद्वीपस्य मध्यदेशे

---

1. एकोनषष्ट्यधिकाष्टशतोत्तरद्विसहस्रतमान्तम्. 2. एकाधिकषट्शतोत्तरत्रिसहस्रतमान्तम्. 3. एकोनषष्ट्यधिकचतुस्सहस्रतमान्तम्. 4. द्व्यधिकशतोत्तरत्रिसहस्रेभ्यः. 5. पञ्चोत्तरपञ्चसहस्रतमम्. 6. मातृ=mother, पितृ=father, भ्रातृ=brother, स्वसृ= sister, दुहितृ = daughter etc. 7. संवादः=identification.

जनानाम् उत्पीडाद् भोग्यविशेषेष्वभिलाषाच्च तं देशं विहाय तत इतो गणशः प्रतस्थिरे ।

तेषु दक्षिणतः पारसीकान् अभि प्रस्थितेषु गणेषु कतिपये भारतं प्रविश्य सिन्धुनदस्य पश्चिमं तीरं प्रापुः ।

## अर्याणां पञ्चनदवासः.

अथ ते सिन्धुम् उत्तीर्य तं वितस्तां चन्द्रभागाम् इरावतीं विपाशां शुतुद्रिं च नदीम् अन्तरास्थिताः पञ्च[1] क्षितीः पञ्चनदशब्दिता वशे चक्रुः । तत्र ते नवनवान् ग्रामान् नगराणि कृष्याणि च स्थलानि निरवर्तयन् ।

पञ्चसु क्षितिषु वासात् कृषिकर्मणोपजीवनाच्च ते पञ्च[2] कृष्टयः सम्पन्नाः । कृष्टय इति कर्षका उच्यन्ते । ते हि गणाः कृषिकर्मणि निपुणा आसन् । तत एव तेषाम् आर्या इत्यपि नाम प्रतीतम् ।

1. 'एषास्या युजाना परकात् पञ्च क्षितीः परि सद्यो जिगाति' (ऋग्वे. अष्ट. ५. अ. ५. व. २२.) 2. यस्येक्ष्वाकुरुपव्रते रेवान् मराय्येधते दिवीव पञ्च कृष्टयः' (ऋग्वे. अष्ट. ८. अ. १. व. २४.)

भारते वसन्तः सर्वे हिन्दवस्तेषामेव सन्तानाः ॥

# आर्याणां भारताक्रमणम्.

अथार्याः सहजाद् व्यवसायाद् ब्रह्मावर्तं ब्रह्मर्षिदेशं मध्यदेशं चाक्रम्य क्रमेण विन्ध्यान्तस्य भारतस्य स्वामिनोऽभवन् । गच्छति काले दक्षिणापथं लङ्कां च तेषां प्रतापः प्रविवेश । अस्य भारताक्रमणस्याद्यन्तकालं[2] १६०० वर्षाणि वदन्ति ।

# प्राञ्चो भारताभिजनाः.

प्राग् आर्याणां प्रवेशात् पञ्चनदादिषु देशेषु जनवर्गा उभये प्रतिवसन्ति स्म ।

तेष्वेके मृगप्राया 'म्लेच्छा' 'राक्षसा' इति च शब्दिताः । प्रतीकारे यत्नवन्तोऽप्येते प्रबलैरार्यैः परिभूता बभूवुः । आर्यैर्जिताज्जिताच्च देशाद् अपसृत्य ते गिरीन् वनानि च प्रतिपेदिरे ।

---

1. 'हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः स कीर्तितः ॥' (मनुः) विनशनम् = the place where the river Sarasvati is lost in the sand. 2. षट्शताधिकं सहस्रम्.

सम्प्रति मध्यभारते वङ्गविषये राजस्थाने दक्षिणापथे च यान् वन्यजातिवर्गान् पश्यामः, ते तेषां सन्ताना इत्यभिमानः[1]।

अपरे तु वर्गाः 'तुरेनिय'[2]नामानः शकस्थानादिभ्यो[3] देशेभ्य आगताः। एत आर्याणाम् आज्ञाकरा भूत्वा मताचारान् परिगृह्णन्ति स्म।

एषां च वंश्या आन्ध्रेषु द्रमिलेषु कर्णाटेषु केरलेषु चान्तर्भूता इत्यभिमानः।

## आर्याणां भाषा.

आर्याणां भाषा पुरा संस्कृतम् आसीत्। तदातदा दृष्टान् विषयान् अधिकृत्य तया भाषया ते बहून् ग्रन्थान् क्रमेण रचयाम्बभूवुः, येषूपदिष्टम् अर्थं तद्वंश्याः प्रमाणयन्ति।

ग्रन्थाश्च वेदो ब्राह्मणम् उपनिषद् इतिहासः स्मृतिः निरुक्तं शिक्षा व्याकरणं छन्दः कल्पो ज्यौतिषं गणितं साङ्ख्यं योगो बुद्धदर्शनं मीमांसा वैद्यकं पुराणम् इति नामभिः सप्रभेदाः प्रथन्ते।

---

1. Supposition. 2. Turanians. 3. शकस्थानं (Bactria) आदिर्येषां तेभ्यः.

# वेदः.

वेदश्चतुर्धा—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति ।

ऋग्वेदो मन्त्रैर्देवताः स्तौति ।

यजुर्वेदेऽपि मन्त्राः सन्ति । किन्तु विधिरर्थवादश्च तत्र वर्तेते । कर्तव्यस्याकर्तव्यस्य चोपदेशो विधिः । अर्थवादस्तु प्ररोचनायै कर्तव्यस्य स्तुतिः, प्रद्वेषायाकर्तव्यस्य निन्दा च भवति ।

ऋग्विशेषा एव गीतियुक्ताः सामवेदः ।

एषां त्रयाणाम् उपयोगो यज्ञकर्मसु भवति ।

अथर्ववेदस्तु शत्रुनिग्रहफलेषु कर्मसूपयुज्यते ।

ब्राह्मणान्युपनिषदश्च प्रतिवेदं भिन्नानि[1] सन्ति ।

आर्याणां मतं सर्वाणि च शास्त्रतत्त्वानि वेदेऽन्तर्गतानि । त एते वेदाः सब्राह्मणाः सोपनिषदो वेदकालब्राह्मणकालयोरन्तराले ऋषिभिर्निर्मिता इति

1. भिन्नानि च भिन्नाश्च भिन्नानीति नपुंसकैकशेषः.

नवीनाः पण्डिता आहुः। ईश्वरमुखाद् वेदा आविर्भूता इति वेदभक्ताः।

## ऋषयः.

वेदद्रष्टारोऽन्ये च ये 'ऋषय'[1] इति प्रसिद्धाः; ते प्राकृतान् जनान् अपेक्ष्य विद्यया गुणेन चारित्रेण चोत्कृष्टाः; न तु ते निग्रहेऽनुग्रहे वा शक्ता इति नवीनाः। निग्रहानुग्रहयोः शक्तिरपि तेषां स्थितैवेत्यार्याः।

## वैदिकमतम्.

आर्या दैवम् अस्ति इति मतम् आश्रिताः।

आपोऽग्निः सूर्यो वायुर्भूमिराकाश इत्येतेषां विशिष्टं महत्त्वं पश्यामः। एतैर्हि जायमानाः प्राणिनाम् उपकृतयः सङ्ख्यातुं न शक्यन्ते। अत एतेषु ते दैवबुद्धिं चक्रुः; सत्योद्यै[2]र्मन्त्रैरेतान् स्तुवन्ति स्म; पयसा घृतेन हविषा मांसेन च यजन्ते स्म। परस्स[3]-

1. The seers of the Veda. 2. Veracious. 3. More than a thousand.

हस्रा हि यज्ञा वेदेषु प्रतिपादिताः। यज्ञेषु च महती श्रद्धा तेषां स्थिता।

क्रमेण तेऽग्न्यादीनाम् अपि कारणं विमृशन्तः सर्वानुस्यूतं चिदानन्दरूपं वस्तु परब्रह्मशब्दितम् उपनिषद्भिर्व्यवस्थापयामासुः। अस्य निरन्तरया भावनया जीवानां मोक्षो भवति। अन्ये पुनरुपासनाभेदा एतस्याः परिचायकाः। आ मुक्तेर्जीवानां पुनर्जन्म भवतीति चार्याणामभ्युपगमः।

सत्यं शौचं दया दानं क्षमेति महागुणाः पुण्यहेतवः। अनृतं क्रोधः परदारसङ्गो मधुपानं लोभो हिंसेति दोषा महापातकहेतवः। एकदारनियमः पातिव्रत्यं च परमं ब्रह्मचर्यम् आर्याणाम्॥

# विद्याभ्यासः.

विद्याविषये परमः फलवान् यत्न आर्यैरादृत आसीत्।

विद्वांसो विद्यार्थिनम् उपगतं धनानपेक्षया

1. Omnipresent.

विद्याम् अध्यापयामासुः। राजभिश्च विद्यामन्दिराणि राजधानीषु परिकल्पितानि।

[1]माणवकस्यावरतो द्वादश वर्षाणि गुरुकुले वासो भवेत्; स गुरुं भक्त्या शुश्रूषमाणो विद्याम् अधीयीत; अथ [2]यथाशक्ति दक्षिणां गुरवे समर्प्य स गुरुकुलात् समावर्त्तेत। इत्येषा पुरातनी विद्याभ्यासरीतिः।

समावर्तमानं च शिष्यं गुरुरेवम् अनुशास्ति— '[3]सत्यं वद। धर्मं चर। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि' इति।

न केवलं पुरुषाः, स्त्रियोऽपि पुरा विद्यां निरङ्कुशम् अभ्यस्यन्ति स्म। ताः किल ब्रह्मविद्यायाम् अपि निपुणा बभूवुरिति [4]उपनिषद् अस्मान् बोधयति। ये विद्वांसः, ये च प्रवक्तारः, तेष्वसामान्यो

---

1. माणवक=boy. 2. According to one's means. 3. तैत्तिरीयोपनिषद् (१. ११). 4. बृहदारण्यकम् (३. ६).

बहुमानो राज्ञां जनानां चासीत्। अतश्च विद्याभ्यासे बाला अतिमात्रम् उद्यमिनोऽभवन् ॥

## अभ्यवहारः.

गोधूमादि[1] धान्यं क्षीरं दधि नवनीतं घृतं मांसं चार्याणां साधारणं भोज्यम्। तच्च देवेभ्यो निवेद्य भुक्तम् आसीत्। कालेन ते यज्ञाद् विशिष्टस्यातिथेः सत्काराच्चान्यत्र मांसस्योपयोगे प्रत्यवायम् अमन्यन्त। बुद्धमुनेः कालात् परतो ब्राह्मणा यज्ञमात्रे मांसम् उपयुक्तवन्तः।

यो मांसं भक्षयितुम् इच्छति, तम् उद्दिश्यैव विहितः समांसो यज्ञ इति तु [2]पुराणान्युपदिशन्ति।

मद्यस्य न केवलं पानं, तत्पायिनः संसर्गोऽपि दोषाय भवतीत्यार्याणां निर्णयः ॥

## कृषिः शौर्यं शिल्पं वाणिज्यं च.

आर्याः कृषौ निपुणा इति प्राग् अवदाम।

---

1. गोधूमः=wheat आदिर्यस्य तत्. 2. 'लोके व्यवायामिषमद्यसेवाः' इत्यादि श्रीभागवतम्।

युद्धे तेषां सामर्थ्यं भारतवासिनां शत्रूणां नि-ग्रहात् स्पष्टम् । अश्वो रथो धनुर्बाणोऽन्यानि चायु-धानि युद्धे तेषाम् उपकरणान्यासन् । कवचम् उ-ष्णीषं च तैरुपयुक्तम् । तेनाश्वस्य शिक्षणे रथादीनां निर्माणे च तेषां सामर्थ्यं व्यक्तं भवति ।

शिलायां दारुणि लोहे चार्याणां लोकोत्तरं नैपुण्यम् आसीत् । तद् अद्यापि बुद्धगयायां गिरिव्रजे उदयगिरिगुहासु पुरातनेषु चैत्येषु विहारेषु देवालये-षु च बहुषु साक्षात् कर्त्तुं शक्यते ।

वाणिज्यं कुसीदं[1] च सम्यग् आर्यैर्व्यवहृतम् आसीत् । द्विसहस्रवर्षेभ्यः प्रागपि महाम्बापुरे वा-णिज्यस्याभिवृद्धिर्दृष्टा । बुद्धमतकालस्यान्तिमे भागे भारतस्य यवद्वीपेन चीनदेशेन च वाणिज्यसम्बन्धम् [2]अवगच्छामः । तदानीं ब्राह्मणानां समुद्रयात्रया तत्र गतागते चास्ताम् ॥

## राज्यतन्त्रम् .

पुरा क्षत्रिया राज्याधिकारे विधिवद् अभिषि-

1. Usury. 2. (Hewnthsang).

क्ता बभूवुः। राजभिः किल नाम वीर्यं विद्या शीलम् अलोभ आत्मजय इत्येषां गुणानाम् आयतनैर्भाव्यम्। ते जनानां हितान् धर्मान् मन्त्रसभायां संमन्त्र्य व्यवस्थापयामासुः । परिलघुः करो[1] जनेभ्य उत्थापित आसीत्। तथा संगृहीतं धनम् इष्टेषु[2] पूर्तेषु[3] सेनाङ्गेषु राजकार्याधिकृतेषु विद्वत्सु च विनियुक्तम्।

कुलीनैर्विद्वद्भिर्ब्राह्मणैः सह राजानो व्यवहारान् स्वयम् अपश्यन् । राज्ञां जनेषु वात्सल्यम् अपत्येष्विवासीत् । जनानां च राजसु देवतास्विव भक्तिरासीत्। राज्ञां जनानां च परस्परविषयेषु समाचरणेषु स्वल्पोऽपि व्यतिक्रमो दैवकोपं जनयेद् इति दृढो विश्वासः स्थितः ।

जनद्रोहिणां राज्ञां निग्रहणेऽपि शक्तिः फलवती प्रवृत्तिश्च जनानाम् आसीद् इति वेनोपाख्यानाद्[4] अवगच्छामः ॥

---

1. Tax. 2. 'अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम्। आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥' (मनु). 3. 'वापीकूपतटाकादिं देवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥' (अत्रिः). 4. वेनो नाम दुर्वृत्तो राजा ब्राह्मणैर्निगृहीतः, पृथुचक्रवर्ती च तत्स्थाने स्थापित इति ऐतिहासिकी कथा.

# जातिः

जातिर्वर्ण इत्युच्यते। सा चतुर्विधा प्रथते। यथा—ब्राह्मणजातिः क्षत्रियजातिर्वैश्यजातिः शूद्रजातिरिति। आसु पूर्वपूर्वाम् अपेक्ष्योत्तरोत्तरां जातिम् अपकृष्टाम् आर्या अभिमन्यन्ते।

उत्कृष्टजातेर्निकृष्टजातेश्चानुलोमतः[1] प्रतिलोमतश्च[2] दाम्पत्ययोगात् पञ्चमी च कापि जातिः सङ्करजातिरिति गण्यते। अस्या अवान्तरविभागा बहवः कृताः सन्ति। तत्रानुलोमसङ्करः प्रशस्यते। अनुलोमसङ्करजो हि पितृजातिम् उत्कृष्टां लभते।

तत्र ब्राह्मणादीनां त्रयाणां यजनम् अध्ययनं दानम् इति साधारणं कर्म भवति। असाधारणं तु कर्म ब्राह्मणस्य याजनम् अध्यापनं प्रतिग्रहश्च; क्षत्रियस्य प्रजापालनम्; वैश्यस्य कृषिर्वाणिज्यं शिल्पं च; शूद्रस्य वर्णत्रयशुश्रूषा। एवं सङ्करजातेरपि नानाविधा वृत्तयो व्यवस्थापिताः।

---

1. In regular order = A man of high caste marrying a low-caste woman. 2. This word is the opposite of अनुलोमतः.

तामिमां जातिचतुष्टयव्यवस्थां प्रपञ्चेऽस्मिन् हिन्दव एवाद्रियन्ते; अनादिकालसिद्धां च वदन्ति। अस्यास्तत्त्वं च नवीनैः पण्डितैर्विमृष्टम् अस्ति।

अयं तु कश्चिदूहः—इह हि मानुषाणाम् अवर्जनीयाश्चतस्रो वृत्तयो भवन्ति—विद्यावृत्तिः शूरवृत्तिः अर्थवृत्तिः शुश्रूषावृत्तिरिति।

लोकतत्त्वस्य दैवतत्त्वस्य च ज्ञानं विद्या। तदनुसारिणी वृत्तिर्विद्यावृत्तिरुच्यते।

सर्वोपायैः शत्रुनिग्रहः शूरवृत्तिः।

वाणिज्यं कृषिः पशुपालनं शिल्पं चार्यवृत्तिः।

परिचरणं शुश्रूषावृत्तिः।

जनानां योगक्षेम एतास्वेव चतसृषु वृत्तिष्वायतते।

आसां [1]व्यस्तानां मि[2]लितानां वा यथारुचि यथासामग्रि परिग्रहम् अविशेषेण जनाः कर्तुमर्हन्ति। एष न्यायः पुरा जरत्तमार्यैः स्वीकृतो बभूव। यो हि

1. Taken singly. 2. Mixed.

यस्या वृत्तेरनुरूपो दृष्टः, स जनस्तस्यां वृत्तौ नियुक्त आसीत्।

वृत्तीनां च साधारणत्वाद् ब्राह्मणादीनां शब्दानाम् अनियमेन व्यवहार आसीत्। विद्यावृत्त्या हि जनो ब्राह्मण[1] इति व्यवहृतस्तत्त्वज्ञानात्। शूरवृत्त्या क्षत्रिय[2] इति राजन्य[3] इति च व्यवहृतो विपदो रक्षणात्। अर्थवृत्त्या वैश्य[4] इति व्यवहृतो वाणिज्यादौ प्रवेशात्। शुश्रूषावृत्त्या शूद्र[5] इति व्यवहृतः शोचनात्।

तत्र प्रथमवृत्तिर्गुणबाहुल्याद् उत्कृष्टा भवति। द्वितीया वृत्तिर्हिंसासम्बन्धात् तदपेक्षया किञ्चिदवरा। तृतीया वृत्तिरसत्यसम्बन्धात् ततो निकृष्टा। चतुर्थी वृत्तिस्तु बुद्धिगुणहानेः सर्वापेक्षयाधमा।

एतदेव वृत्तीनां तारतम्यं ब्राह्मण ईश्वरस्य

---

1. ब्रह्म शुद्धचैतन्यं (Supreme Being) वेदं वा वेत्तीति ब्राह्मणः. 2. क्षताद् विपदो जनं त्रायत इति क्षत्रियः 3. विपन्निवारणेन जनं रञ्जयतीति राजन्यः. 4. विशति वाणिज्यादौ वैश्यः. 5. शोचति शुश्रूषया शूद्रः.

मुखाज्जातः, क्षत्रियो बाहोर्जातः, वैश्य ऊरोर्जातः, शूद्रः पादाज्जात इति वदता वेदेन प्रकाश्यते ।

क्रमेण पितृषु पुत्रान् स्वस्ववृत्तौ प्रोत्साहयत्सु ता वृत्तयः कालान्तरे कुलवृत्तयः सम्पन्नाः । वृत्तिपरिग्रहे कामचारस्तस्मिन्नपि काले स्थित एव । किन्तु कुलानुवृत्तौ वृत्तीनां गुणातिशयस्य दर्शनात् कामचारापेक्षया कुलानुवृत्तौ जनानाम् अधिक आदर उपजात आसीत् । प्रायेण हि पुरुषाणां स्त्रीणां वा गुणा दोषाश्च सन्ततिम् उपसङ्क्रामन्तो दृश्यन्ते । गुणप्रत्याशया हि लोकः कुलीनं बहुमन्यते ।

सर्वस्य च जगतस्तदा शिशुभावेऽस्थानाद् वृत्तीनां सौष्ठवं स्वप्रयत्नेन केवलम् आर्यैः साधनीयम् आसीत् । न हि त्रिसहस्रवर्षेभ्यः प्राक् प्रबुद्धा काचिद् मानुषजातिरार्यान् अन्तरेणाभवत् ।

---

1. 'ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः । पद्भ्यां शूद्रोऽजायत' इति पुरुषसूक्तम्. 2. कुलानुवृत्तिकालेऽपि ।

आभ्यां[1] हेतुभ्यां वृत्तीनां सन्तानेष्वनुवृत्तिं कालेन ते नियमयामासुः।

अनेन नियमेन ब्राह्मणजातिः क्षत्रियजातिर्वैश्यजातिः शूद्रजातिरिति चतस्रो जातयः सिद्धा बभूवुः। अत एव वृत्तिभेदेन जातिभेदः कल्पित इति भारतम्[2] आह।

न चायं वर्णभेदः पूजाभेदस्य हेतुरपि सन् जनानां मिथः कलहम् ईर्ष्यां वा जनयामास। ते हि वर्णाः स्वस्वकृत्यानि तथा निरवर्तयन्, यथा ते परस्परेण परस्परम् उपकृतम् एव मेनिरे। जनसमुदायस्य स्वास्थ्यं तृप्तिः सुखं च वर्णधर्मैरुपचितं बभूव। जनस्य जातिमात्रेण नोत्कर्षो भवति; किन्तु जात्युचितैर्गुणैराचारैश्चेति खल्वार्या उद्घोषन्ति[3]।

---

1. वृत्तीनां कुलानुवृत्तौ गुणदर्शनमेको हेतुः, वृत्तिसौष्ठवस्य स्वप्रयत्नमात्रसाधानीयत्वमपरो हेतुः. 2. 'ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्' इति शान्तिपर्वे. १८८ अध्याये. 3. 'यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम्। यदन्यत्रापि दृश्येत तत् तेनैव विनिर्दिशेत्' इति श्रीभाग. ७. स्क. १२. अध्याये।

अधिकारश्च विद्याभ्यासे त्रयाणां वर्णानां समानः कल्पितः। शूद्राणां वेदाध्ययनस्याभावेऽपि ब्राह्मणादिभ्यो धर्मतत्त्वस्य श्रवणम् अनुमतमेव । स्वजातिवृत्तावशक्तस्यान्यजातिवृत्तिरनुजज्ञे ।

गुणविशेषशालिनोऽवरवर्णस्य ब्राह्मणत्वमपि सुलभम् आसीत्। अत एव—'शूद्रो ब्राह्मणताम् एति ब्राह्मणश्चैति शूद्रताम्' इति मनुराह ।

अग्र्यवर्णानाम् अवरवर्णात् स्त्रीपरिग्रहणं न निषिद्धम् आसीत् ।

ईश्वरः साक्षितया स्थित इति विश्वासाद् रहस्यपि स्वस्वकृत्याद् व्यतिक्रमं प्रायेण वर्णा न चक्रुः।

एवं तावच्चातुर्वर्ण्यम् अभिन्नमर्यादम् एकं कुडुम्बम् इव स्नेहस्यैकमत्यस्य वृत्तिनियमस्य दैवभक्तेश्च परमं फलं परस्सहस्राणि वर्षाण्यनुपद्रुतम् अनुबभूव।

केचित् पुनर्ब्राह्मणानां क्षत्रियसहायानां स्वा-

1. Selfishness.

र्थपरतामेव जातिव्यवस्थायां हेतुम् ऊहन्ते; ऊह-स्थानानि च दर्शयन्ति—

१. 'ब्राह्मणो वै सर्वा देवताः'।

२. ब्राह्मणे प्रीते जगदीश्वरः प्रीतो भवति।

३. याजनम् अध्यापनं प्रतिग्रहश्चेति वृत्तयो ब्राह्मणस्यैवार्हाः।

४. अपराधे महत्यापि ब्राह्मणस्य देहदण्डाभाव इति।

वस्तुतस्तु जरत्तमा ब्राह्मणा न स्वार्थपरा बभूवुः। ते हि प्रकृत्या नरभोगान् नातीव चकमिरे। शान्त्या दान्त्या च युक्ताः सन्तो वनेषु वनकल्पेषु ग्रामेषु च वसन्तः सुलभैर्मिताहारैः संतृप्ता ईश्वरोपासनया विद्याव्यासङ्गेन तीर्थयात्रया च ते कालं निन्युः। राज्ञा ते कालेकाले समाहूताः कार्यसंमन्त्रणं पौरोहित्यं वाचेरुः।

अतस्तेभ्यः सम्पद्यमानान् उपकारान् स्मरद्भिः सर्वैर्वर्णैर्ब्राह्मणजातये पूर्वोक्तोऽसाधारणो बहुमानः प्रीतिदाय उपकल्पित इति युक्तम् उत्पश्यामः।

तस्मिन्नपि प्रीतिदायेऽस्मत्पूर्वब्राह्मणानाम् आस्था नैवासीत्[1]। अत एव ते धनार्थे याजनम् अध्यापनं च निनिन्दुः; प्रतिग्रहं च पातकहेतुम् उद्घोषन्ति स्म।

अवश्यं च विश्वामित्रोपाख्यानं परशुरामचरितं चात्र विषये स्मरणम् अर्हतः। विश्वामित्रो हि ब्राह्मणत्वाय न धनतृष्णां स्वीकृतवान्; प्रत्युत राज्यभोगान् वर्जितवान्; परशुरामश्च सकलक्षत्रियजयेनार्जितमपि राज्यं परित्यज्याश्रमवासिनाम् उचितां स्वजातिवृत्तिं भेजे।

'ब्राह्मणो वै सर्वा देवता' इत्यादि वचनजातं त्वर्थवादो भवति। गुणभूयिष्ठो जनो माननीय इत्येतावति चार्थे तस्य तात्पर्यम्।

तमेतं गुणहेतुं सन्तं जातिनियमं जना दोषे पर्यवसाययन्ति स्म कालान्तरे। इममर्थं बुद्धमतप्रस्तावे वक्ष्यामः॥

1. 'सम्मानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव। अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा' (मनुः).

# रामायणम्.

पुरा भारतखण्डे सूर्यवंश इति कश्चिद् राजवंशः प्रसिद्धतम आसीत्। तत्र जातस्य श्रीरामस्य चरितं वाल्मीकिर्नाम महर्षिः श्लोकैरुपगायति स्म। त एते श्लोका 'रामायणम्' इत्याख्याताः। रामायणस्य सप्त काण्डानि। ग्रन्थसङ्ख्या चास्य चतुर्विंशतिः सहस्राणि भवन्ति। अत्र काव्यगुणाः समग्राः सन्ति। अस्य निर्माणात् प्राग् न किञ्चिदपि काव्यम् अवर्तत; अत इदम् 'आदिकाव्यम्' इत्युच्यते। अस्य पठनाद् ईश्वरः प्रसन्नो भवतीति हिन्दूनां विश्वासः॥

# श्रीरामचरितम्.

अयोध्यायां पुरा 'दशरथो' नाम राजा बभूव। तस्य 'कौसल्या' 'कैकेयी' 'सुमित्रा' इति तिस्रो धर्मपत्न्य आसन्। तस्य पुत्रार्थे तत्पुरोहितस्य वसिष्ठमहर्षेरनुमत्या जामाता ऋश्यशृङ्गो नाम महर्षिः पुत्रकामेष्टिम् अनुष्ठितवान्। ततः कौसल्या ज्येष्ठा

राजपत्नी 'श्रीरामं', कैकेयी मध्यमा 'भरतं', सुमित्रा कनिष्ठा लक्ष्मणशत्रुघ्नौ यमलौ च सुषुवे।

अधीतसाङ्गवेदेषु तेषु बालेषु रामलक्ष्मणौ महर्षिर्विश्वामित्रो यज्ञरक्षायै स्वाश्रमं निनाय; अस्त्र-विद्यां चाध्यापयामास। गुरुः स्वारब्धस्य यज्ञस्य वि-घ्नकारिणो राक्षसान् हतवतोस्तयोः शिष्ययोरत्यन्तं प-रितुतोष।

अथ ताभ्यां सह महर्षिर्विदेहाधिपतेर्जनकस्य राजधानीं मिथिलां जगाम। तत्रान्यैरनमितं जनकेन पूज्यमानं शैवं धनुर्विशेषं जनकस्य गुरोश्चानुमत्या रामो लीलया नमयन् बभञ्ज। तेन स्वबाहुवीर्ये प्र-त्यक्षिते वीर्यशुल्काम् अतिसुन्दरीं जनकस्य सुतां 'सीतां' रामः परिणयति स्म। तस्यान्यां कन्याम् ऊ-र्मिलां लक्ष्मणः, तद्भ्रातुः सुतां माण्डवीं भरतः, श्रुत-कीर्तिं शत्रुघ्नश्च परिणिनाय।

ततो मार्गे प्रत्यवस्थितं क्षत्रशत्रुं परशुरामं जि-त्वा सदारः सह भ्रातृभिरयोध्यां रामः प्रत्याजगाम।

अथातिवृद्धो दशरथः सर्वैर्गुणैरुपेतं प्रियं ज्येष्ठं पुत्रं रामं राज्येऽभिषेचयितुं मतिं चकार । किन्तु तस्य स मनोरथः कैकेय्या विफलित आसीत् । पुरा हि क्वचन युद्धे कृतोपकारायै तस्यै परितुष्टेन दशरथेन द्वौ वरौ यथेच्छवरणीयौ प्रतिश्रुतौ । तयोरेकं वरं 'भरतो राज्येऽभिषेक्तव्य' इति, अन्यं वरं 'चतुर्दशवर्षाणि वन्यवृत्त्या रामेण वने वर्त्तितव्यम्' इति च सा साम्प्रतम् अवृणीत ।

राज्यमनिच्छतः स्वभक्तस्य भरतस्य प्रार्थनया राज्याभिषेकायात्मनः पादुके प्रतिनिधाय रामः सह सीतया लक्ष्मणेन च पितृवाक्यगौरवाद् वनं प्रविवेश । दशरथस्तु पुत्रवियोगम् असहमानो भूलोकवासम् अत्यजत् ।

वने चरन्तौ रामलक्ष्मणौ कापि कामुकी राक्षसी शूर्पणखा नाम कदर्थयामास । कदर्थनासंरम्भम् असहमानो मायाविन्यास्तस्या नासां लक्ष्मणश्चकर्त्त ।

अथ कुपितया तया चोदितस्तद्भ्राता रावणो

नाम लङ्कापतिः सीतादेवीं मारीचस्वर्णमृगमायया रामलक्ष्मणाभ्यां रहयित्वापजहार; लङ्कायां चावरुरोध। अथ सुग्रीवं वानरपतिं तद्भ्रातुर्वालिनो वधाद् उपकृतं हनुमत्प्रभृतिभिर्वानरसैन्यैरुपेतं सहायम् आसाद्य सलक्ष्मणो रामः सेतुमार्गेण लङ्कां जगाम; रावणभ्रातरं च शरणागतं विभीषणं स्वपक्षे चकार। ततः स्वदारापहारिणं रावणं सपरिजनं हत्वा रामः सीतां प्रत्यानिनाय।

बहुभिः प्रकारैरवगतायां तस्याः शीलशुद्धौ स तया लक्ष्मणेन च सार्धम् अयोध्यां प्रत्यागत्य चिरं धर्मेण राज्यम् अशिषत्।

अथ सीतायाः शीलशुद्धिं प्रति मिथ्यापवादो लोके बहुलीबभूव। अतस्तां पतिव्रतां जानन्नपि रामो लोकापवादभयात् कठोरगर्भाम् अरण्ये तत्याज। तत्र यमलौ कुशलवौ प्रसूतवती सा महर्षिणा वाल्मीकिना परिरक्षिता बभूव।

---

1. मारीचप्रयुक्तेन कनकहरिणव्याजेनेत्यर्थः।

अथ हिरण्मयीं सीताप्रतिकृतिं पत्नीं कृत्वा क्रतुम् अश्वमेधम् आहरते रामाय वाल्मीकिः सपुत्रां सीताम् आनीय निवेदयामास। पुनरपि तस्याः शुद्धौ प्रत्ययम् अपेक्षमाणे रामे सीता दुःखातिभारात् पश्यत्सु महाजनेषु भूमिदेवतया पातिव्रताप्रीत्या किल दत्तं विवरं प्रविवेश।

ततः सत्यपरिपालनाय रामो लक्ष्मणम् अपि त्यक्तवान्; अचिरेण च राज्यं पुत्रयोरर्पयित्वा सह भरतशत्रुघ्नाभ्यां स्वर्गं प्रपेदे।

अनया कथया दक्षिणापथो लङ्काद्वीपश्च ब्राह्मणकालस्य शेषे सम्यग् आर्यैर्विदिताविति ज्ञाप्यते।

पितृभक्तिः पुत्रवात्सल्यं भ्रातृस्नेहो मित्रभावः स्वामिभक्तिः पातिव्रत्यम् एकदारनियमो जनरञ्जनं धर्मानुरोध इत्येतेषां गुणानां हृदयहारिण्युदाहरणे रामचरितम् अतिशयान इतिहासो जगति नोपलभ्यते॥

---

1. ब्राह्मणकालस्यान्तिमभागे रामायणं निर्मितामिति नवीनाः सूरय उहन्ते।

# महाभारतम्.

सूर्यवंश इव चन्द्रवंश इत्यपि कश्चिद् राजवंशः सुप्रसिद्ध आसीत्। तस्मिन् जातानां पाण्डवानां चरितं ग्रन्थरूपेण व्यासमहर्षिर्वर्णयाञ्चकार। सोऽयं ग्रन्थो 'महाभारतम्' इत्युच्यते। अस्याष्टादश पर्वाणि सन्ति। ग्रन्थसङ्ख्या चास्य लक्षं भवति। अत्र लोकधर्मा राजधर्मा शास्त्रतत्त्वानि च वितत्य प्रतिपादितानि। सर्ववेदान्तानां सारं विशदयन्ती भगवद्गीतात्रैवान्तर्भवति। काव्यगुणाश्चात्र पुष्कलाः सन्ति। अस्याः पारायणम् आर्याः पुण्यहेतुं मन्यन्ते। तद् एतद् उच्यते 'भारतं पञ्चमो वेद' इति।

# पाण्डवचरितम्.

हास्तिनपुरे विचित्रवीर्यस्य राज्ञो 'धृतराष्ट्रः' 'पाण्डुः' इति द्वौ सुतौ भिन्नोदरजावभवताम्। तयोर्ज्यायसो धृतराष्ट्रस्य गान्धार्यां 'दुर्योधनो' 'दुःशा-

---

I. इदं ब्राह्मणकालशेषे निर्मितं वदन्ति।

सन' इत्याद्याः शतं पुत्रा अजायन्त; पाण्डोस्तु पञ्च पुत्राः। तेषु 'अजातशत्रुः' 'भीमः' 'अर्जुनश्च' कुन्त्यां, 'नकुलसहदेवौ' माद्र्यां च जज्ञिरे।

अन्धो धृतराष्ट्रो राज्याधिकारिणि भ्रातर्युपरते तत्पुत्राणां बालानां पाण्डवानां योगक्षेमं चिन्तयामास। तच्चोदनया[1] तान् धार्तराष्ट्रशतं च कृपद्रोणावस्त्रविद्याम् अध्यापयामासतुः।

दुर्योधनस्तु राज्यलोभात् पाण्डवानां प्रच्छन्ने हनने बहून् यत्नान् अकरोत्। स कदाचिद् वारणावते लाक्षागृहं निर्माय तत्र पाण्डवान् वासयामास। ते तत्कृतं कपटवधोपायम् अवगत्य स्वयमेव लाक्षागृहं दग्ध्वा मात्रा सह ब्राह्मणवेषधारिणः कञ्चित् कालं भैक्षवृत्त्या जीवन्ति स्म।

ततः पञ्चालेषु द्रौपदीस्वयंवरे शुल्कतया व्यवस्थितं लक्ष्यवेधनं कृत्वार्जुनेनायत्तीकृतां पञ्चालराजपुत्रीं द्रौपदीं मातृवाचा पञ्च ते परिणिन्युः; वर्षपर्यायभोग्यां च तां व्यवस्थापयामासुः।

---

1. तस्य धृतराष्ट्रस्य चोदनया।

अथाजातशत्रुर्धृतराष्ट्रेण दत्तम् अर्धराज्यं पालयन् विधेयैर्भ्रातृभिः सार्धमिन्द्रप्रस्थे सुखमुवास ।

द्वारकापुरस्याधीश्वरो यदुवंश्यः सर्वेषां सद्गुणानामायतनं दिव्यमहिमा वीरः श्रीकृष्णः पाण्डवानां मातुलपुत्रः सौराष्ट्रेषु प्रसिद्ध आसीत् । स धर्मप्रीत्या बन्धुप्रीत्या च पाण्डवानां सर्वदा सहायो बभूव ।

ततः शौर्ये धने कीर्त्तौ च पाण्डवानाम् उत्कर्षम् अभिवर्धमानम् असहमानो दुर्योधनो मातुलशकुनिसहायः[1] कपटद्यूतेन तान् ऐश्वर्यात् प्रच्यावयति स्म; द्रौपदीं सभायाम् अवमेने; द्वादश वर्षाणि वनवासं, वर्षम् एकम् अज्ञातवासं च तान् अङ्गीकारयामास ।

सत्यसन्धाः पाण्डवाः कथमपि तं प्रवासक्लेशं निस्तीर्णवन्तः ।

अथ तेभ्यो जीवनार्थे याचमानेभ्यः पञ्च ग्रामान् अपि धृतराष्ट्रः पुत्रमतानुवर्त्ती न प्रायच्छत् ।

1. मातुलः शकुनिः सहायो यस्य सः ।

अतः पाण्डवानां कौरवाणां च कुरुक्षेत्रेऽति-भीषणं युद्धम् अवर्तत। तत्र श्रीकृष्णसाहाय्यात् कौरवान् निरवशेषं हत्वा पाण्डवा अखण्डं भारतसाम्राज्यम् अलभन्त।

किन्तु भूयिष्ठबन्धुविरहात् तेषां राज्यभोगवाञ्छा स्वल्पेनैव कालेन प्रनष्टाभवत्।

ततः श्रीकृष्णे परमपदं प्रयाते पाण्डवाः सर्वे महाप्रस्थानेन पुण्यलोकं जग्मुः।

एतया कथया राज्ञां बाल्य आयुधाभ्यासः स्त्रीणां सभासु प्रवेशः स्वयंवरश्च तेषु कालेष्वौत्सर्गिक[1] आसीदिति जानीमः।

## ज्यौतिषं गणितं च.

यज्ञकर्मणाम् अनुष्ठाने कालनियम आर्याणाम् आवश्यकः। अतस्तैर्ज्यौतिषस्य तत्त्वं स्वयम् उपज्ञातुम्[2] आरब्धम्; कालेन च सम्यग् अवधारितम्।

1. General. 2. To invent.

यज्ञवेद्या निर्माण उपयोगाय क्षेत्रगणितम् आर्या ददृशुः। एतद् एव प्रमेयम् अधिकृत्य शुल्बसूत्रं प्रवृत्तम्। तच्च कल्पसूत्रेऽन्तर्भवति।

बीजगणितेऽङ्कगणिते चार्याणाम् असाधारणं नैपुण्यम्। त एव जगति दशगुणितविद्याया[1] उपज्ञातार आसन्। इयं बीजगणितं त्रिकोणगणितम् इत्येते विषया: संस्कृताद् आरभभाषाम्[2] उपसङ्क्रान्ताः। ततस्तत्सकाशाद् यौरोपैः प्रथमं विदिताः। यौरोपैरद्यत्वे दृष्टाः केचिद् गणितभेदाः ४२५१[3] तमवर्षजन्मनि सिद्धान्तशिरोमणावुपलभ्यन्ते[4]।

किन्तु हिन्दूपज्ञं ज्यौतिषविज्ञानं क्षेत्रगणितविज्ञानं च यवनैरभिवृद्धिं[5] नीतम्। ३५७७[6] तमवर्षजन्मनार्यभटेन ३६०६[7] तमवर्षजातेन वराहमिहिरेण च ज्योतिस्तन्त्रं प्रपञ्चितम्।

---

1. दशगुणितविद्या=Decimal. 2. Arabic. 3. एकपञ्चाशदुत्तरद्विशताधिकचतुस्सहस्रतमवर्षजन्मनि. 4. अस्य कर्ता भास्कराचार्यः. 5. यवनाः=Greeks. 6. सप्तसप्तत्यधिकपञ्चशतोत्तरत्रिसहस्रतमवर्षजन्मना. 7. षडुत्तरषट्शताधिकत्रिसहस्रतमवर्षजातेन।

# कल्पसूत्रं स्मृतिर्निरुक्तं शिक्षा पुराणम् आगमश्च.

कल्पसूत्रं तावत् श्रौतसूत्रं धर्मसूत्रं गृह्यसूत्रम् इति त्रिरूपं भवति ।

श्रौतसूत्रं यज्ञानाम् इतिकर्त्तव्यतां बोधयति । धर्मसूत्रं राजकीयान् अन्यांश्च लौकिकान् धर्मान् प्रकाशयति । गृह्यसूत्रं गृहसम्बन्धिनो धर्मान् उपदिशति ।

तद् इदं कल्पसूत्रम् ऋषिभिर्निर्मितं प्रतिवेदं भिद्यते ।

स्मृतयः कल्पसूत्रं मूलम् आश्रित्य मन्वादिभिः प्रणीताः । ताश्च विंशतिर्भवन्ति । तासु वर्णधर्मा राजधर्मा धर्मव्यतिक्रमे प्रायश्चित्तानि च प्राधान्येन दर्शितानि । अद्यत्वे जनैरत्यन्तवर्जिताः केचिद्

1. "मन्वत्रिविष्णहारीतयाज्ञवल्क्योशनोऽङ्गिराः । यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥ पराशरव्यासशङ्खलिखिता दक्षगौतमौ । शातातपो वसिष्ठश्च धर्मशास्त्रप्रवर्तकाः" ॥ (याज्ञवल्क्यः)

आचाराः स्त्रीपुनर्विवाहादयः स्मृतिकालेष्वादृता आसन् । परं तु दोषशङ्कया कैश्चित् स्मृतिकारैस्ते प्रतिषिद्धाः ।

निरुक्तं वेदशब्दानां निर्वचनशास्त्रम् ।

शिक्षा शब्दानां यथावदुच्चारणम् उपदिशति ।

पुराणान्युच्चावचानां पुरावृत्तानाम् उपन्यासमुखेनेहामुत्रसुखस्य साधनभूतान् धर्मान् उपदिशन्ति । तानि च वैष्णवस्कान्दादीनि अष्टादश[1] भवन्ति । तेषां कर्ता बादरायणापरनामा वेदव्यास इति प्रसिद्धिरस्ति ।

आगमो देवालयेषु देवस्य प्रतिष्ठापनं, पूजाम् उत्सवं, वाहनालयनिर्माणं चाधिकृत्येतिकर्तव्यतां प्रतिपादयति । आगमस्तन्त्रम् इत्युच्यते । सोऽयं वैष्णवः शैव इति द्विधा प्रथते । शैवागमो वैष्णवाग-

1. "ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा । तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम् । आग्नेयमष्टमं चैव भविष्यं नवमं स्मृतम् । दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् । वाराहं द्वादशं चैव स्कान्दं चैव त्रयोदशम् । चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् । मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम्" ॥ (विष्णुपुराणम्)

माद् अतिविस्तृतः । स च कामिकयोगजादिभेदैर्ब-हुरूपः । अस्ति शाक्तोऽप्यागमः । तत्र शक्तेरुपासना-भेदाः प्रतिपाद्यन्ते ।

आगमेषु क्रियाङ्गतया मन्त्रा अपि नानाप्र-कारा उपदिश्यन्ते। तान् इमान् आगमान् पुराणका-लाद् अर्वाचीनान् आहुः ॥

## दर्शनानि.

आर्याः स्थूलस्य देहस्य, तदुपयोगिनां बाह्या-नाम् अर्थानां वा विज्ञानमात्रेण न तृप्तिम् आपुः । किन्तु देहातिरिक्तस्य वस्तुनो गवेषणायाम् अपि ते प्रतिभां दूरं सञ्चारयामासुः ।

अनेन यत्नेन बहूनि दर्शनानि तैरधिगतानि। तेषु साङ्ख्यदर्शनं कपिलो मुनिः, योगदर्शनं पतञ्ज-लिः, न्यायदर्शनं गोतमः, वैशेषिकदर्शनं कणादः, वेदान्तदर्शनं बादरायणश्च स्थापयाम्बभूव । एषु सा-ङ्ख्यमतम् एकम् अपहाय सर्वाणि दर्शनानीश्वरम् अ-

1. कामिकं योगजं चिन्त्य'मित्याद्युक्तैर्भेदैः ।

ङ्गीकुर्वन्ति । अपि च जैनदर्शनं बौद्धदर्शनम् इति द्वे दर्शने विद्येते ।

सर्वेष्वेषु दर्शनेषु जन्मान्तरं जीवानाम् अभ्युपगम्यते; तत्तन्मतानुसरणे मोक्षसिद्धिश्चाङ्गीक्रियते । किन्तु वेदान्तदर्शन एव परमं तात्पर्यम् उपनिषदाम् इति बादरायणेन युक्तिभिर्निर्णयः कृतः । अतो वेदान्तदर्शनम् एवार्या अद्यापि बहुलम् आद्रियन्ते । वेदान्तदर्शनम् 'उत्तरमीमांसा' इत्युच्यते । सा च व्याख्यातृपरम्परया प्रपञ्चनस्य परां कोटिं नीता जगति दीव्यति । अस्या वृत्तिकारो बोधायनः; भाष्यकाराः श्रीशङ्कराचार्यादयः[1] ॥

## पूर्वमीमांसा.

वेदस्य खलु सामान्यतो द्वौ विभागौ भवतः पूर्वकाण्डम् उत्तरकाण्डम् इति । पूर्वकाण्डं 'कर्मकाण्डम्' इत्युच्यते । तत्र वेदांशा उपनिषद्भिन्नाः सर्वेऽन्तर्भवन्ति । उत्तरकाण्डं 'ज्ञानकाण्डम्' इत्युच्यते । तत्रोपनिषन्मा-

---

1. शङ्कराचार्यो रामानुजाचार्यो मध्वाचार्यः श्रीकण्ठाचार्यश्च ।

त्रम् अन्तर्भवति । तत्रोत्तरकाण्डविचारशास्त्रम् उत्त-
रमीमांसा । सा च समनन्तरम् उक्ता ।

पूर्वकाण्डविचारशास्त्रं तु पूर्वमीमांसा भवति ।
यज्ञकर्मणां वेदोक्तानां तत्त्वम् असन्दिग्धम् अविपर्य-
स्तं च ग्राहयितुं जैमिनिमुनिस्तां सूत्ररूपेण प्रणिना-
य । तत्र सहस्रं न्याया निपुणम् उपन्यस्ताः सन्ति ।
तान् न्यायान् सर्वाणि शास्त्राणि युक्तिगौरवाद् अनु-
सरन्ति । इदमपि शास्त्रम् अतिविपुलतां प्रापितं व्या-
ख्यातृपरम्परया । अस्या भाष्यकारः शबरस्वामी ।
वार्त्तिककारः कुमारिलभट्टः ॥

## व्याकरणम्.

इद नाम व्याकरणस्य तत्त्वं, यत् कतिपयान्
धातून् अवलम्ब्य सहस्रशः पदानि साध्यन्ते । एतद्
अनेकवर्षसहस्रेभ्यः प्रागेवार्यैर्विदितम् आसीत् । इदं
शास्त्रम् अद्भुतया भङ्ग्या सप्तत्रिंशे कलिवर्षशतके पा-
णिनिमुनिः सूत्ररूपेण प्रणिनाय । अस्य मूलं शाक-

टायनीयं व्याकरणम् । अस्य दाक्षिणात्यो[1] मुनिः कात्यायनो वार्त्तिकं वितेने; भाष्यं तु पतञ्जलिमुनिः । एतदेव भाष्यं लोके महाभष्यम् इति प्रथितम् ।

आसीद् अन्योऽपि शब्दशास्त्रस्य प्रपञ्चयिता विन्ध्यजन्मा मुनिर्व्याडिर्नाम । तत्कृतो ग्रन्थः संग्रहनामा महाभाष्ये स्मर्यते । तं च ग्रन्थं लक्षश्लोकपरिमितम् आचक्षते । सोऽयं ग्रन्थो भर्तृहरिकाल एव लुप्तो बभूव । भर्तृहरिर्महावैयाकरणो वाक्यपदीयस्य कर्ता कलिवर्षस्याष्टात्रिंशे शतक आसीत् । अनेन कैयटादिभिश्च पाणिनीयं व्याकरणम् अतिविस्तृतिं नीतम् । अत्र बौद्धैर्बहवो निबन्धा विरचिताः प्रथन्ते ।

व्याकरणविज्ञान आत्मविचारविद्यासु च न केऽप्यद्य यावद् आर्यान् अतिशेरते । अनेन व्याकरणेन दर्शितमार्गा यौरोपपण्डिताः शब्दव्युत्पत्तिशास्त्रं दृष्टवन्तः ॥

---

1. 'प्रियतद्धिता हि दाक्षिणात्या' इति महाभाष्याद् दाक्षिणात्यत्वमनुमीयते ।

# वैद्यकम्.

आर्याणां वैद्यकम् अतिबहोः कालात् प्रभृति संसिद्धं प्रथते। तत्र प्रधानभूतो जरत्तमो ग्रन्थ आयुर्वेद इति व्यवहृतः। तन्मूलास्त्वन्ये वैद्यकग्रन्थाः प्रवृत्ताः। तेषु मुख्यौ प्राञ्चौ ग्रन्थौ चरकसंहिता सुश्रुतसंहिता च। अनयोराविर्भावः कलिवर्षीयस्य त्रिंशस्य शतकस्यासन्ने काले। अत्र रोगा, निदानानि, वीर्यवन्ति विचित्राण्यौषधानि, शस्त्रक्रियाश्च सूक्ष्मम् उपदिश्यन्ते।

तदिदम् आर्यवैद्यकं बहुभ्यः शताब्दीभ्यः प्राग् आरभभाषादिद्वारेण भारतबाह्यान् देशान् अगमत्। यवनवैद्यकस्योपज्ञाता 'हिप्पोक्रिटीशो'ऽपि बहूनाम् औषधानां विज्ञानं हिन्दुसकाशाल्लब्धवान्। यवनेषु सर्पविषचिकित्साया अनभिज्ञेषु हिन्दवस्तस्यां निपुणा आसन्। यवना महत्सु रोगेषूत्पन्नेषु चिकित्सायै ब्राह्मणवैद्यान् उपजग्मुः॥

1. Inventor. 2. Hippocrates.

## नाट्यम्.

नृत्तं गीतं वाद्यम् इति त्रयं 'नाट्यम्' इत्युच्यते; तौर्यत्रिकम् इति च। जरत्तमार्याः साहित्यविद्याया इव नाट्यविद्याया अपि रसज्ञा बभूवुः। अस्या आकरग्रन्थो नाट्यवेद इत्युच्यते। स द्विसहस्रवर्षप्राचीनेन भरतमुनिना प्रणीतः। अभिनवगुप्ताचार्यः ४१००[1] तमवर्षजीवी विस्तृताम् अस्य विवृतिं विरचितवान् अभिनवभारतीं नाम॥

## बुद्धमतम्.

उक्ते जातिनियमे निरङ्कुशम् अनुवर्तमाने गतेषु परस्सहस्रेषु वत्सरेषु क्षत्रिया वीरवृत्तौ वैश्या वाणिज्यवृत्तौ चासक्ताः सन्तो वैदिकेषु यज्ञकर्मसु ब्राह्मणान् प्रायः प्रतिनिधातुम् आरेभिरे। प्रचीयमाने प्रतिनिधानपक्षे तेषां ब्राह्मणेष्वतिबहुमान आसीत्; वेदाध्ययने चावश्यकत्वबुद्ध्यभावाद् अप्रवृत्तिरासीत्।

1. शताधिकचतुस्सहस्रतमवर्षजीवी।

वेदशास्त्रविज्ञानं ब्राह्मणमात्रशरणं बभूव। ब्राह्मणाश्च बहवः सुलभया पूजया संतृप्ता विद्यापरिशीलने यथापूर्वं श्रद्धां न बबन्धुः।

एवं क्षीयमाणे विद्याप्रचारे सर्वेषां वर्णानां विद्यामूलाः सद्गुणा विरला आसन्। क्रमेण तेषां परस्परस्नेहः समदृष्टित्वं 'चातुर्वर्ण्यम् एकं कुडुम्बम्' इति बुद्धिश्चास्तं जगाम। प्रत्युतोत्तमवर्णानाम् अवरवर्णेष्ववज्ञा, तेषाम् उत्तमवर्णेष्वीर्ष्या चाङ्कुरिता बभूव। दोषकलुषाश्च वर्णानाम् आचारा बहुलीबभूवुः।

अस्मिन्नवसरे बुद्धमतं भारते प्रादुरासीत्। इदं मतं जातिनियमाभावाज्जातिनियमक्लेशम् अनुभवतां जनानां काराबन्धमोचनमिव महद् आश्वासस्थानम् अभवत्। ब्राह्मणा अपि केचित् तत्काले गुणदर्शनाद् मतमिदम् अङ्गीचक्रुः; किमुतान्ये।

ऐहिकसुखवैराग्यम्, अहिंसा, सत्यम्, अस्तेयं, शान्तिः, समदृष्टिता, भूतदया, परोपकारः, शरणागतपरित्राणम् इत्येते गुणा आचाराश्च सारभूता

मतेऽस्मिन् ब्राह्मणमतवद् उपदिष्टाः । तथा स्वर्गनरकौ देवाः पुनर्जन्म निर्वाणापरनामा मोक्षश्च मतेऽस्मिन्नभ्युपगम्यन्ते । किन्तु जन्तुहिंसयेश्वरयजनं यद् ब्राह्मणमतेऽङ्गीकृतं, तद् अस्मिन् मतेऽत्यन्तं निन्दितम् । सृगालवादसूत्रे महाराहुलसूत्रे च बुद्धमतस्य तत्त्वान्युपदिष्टानि ।

इदं मतं कलिवर्षीयस्य षड्विंशशतकस्योत्तरार्धेऽङ्कुरितं भिक्षुसङ्घस्य महतां राज्ञां च प्रयत्नाद् भारतम् अखिलम् आक्रम्य चीनेषु जपानदेशे लङ्कायां च प्रचारम् अलभत । तद् अद्यत्वे भारते परं विरलं प्रचरति ॥

## बुद्धमुनिः

पुरा नेपालेषु कपिलवस्तुनगरे शाक्यानां क्षत्रियाणां वंशे शुद्धोदनो नाम राजा बभूव । तस्य चिराय सन्ततिम् अभिलषतो मायादेव्यां सिद्धार्थो नाम सूनुः कलिवर्षे[1] २५४४ तमेऽजायत । अयं वंश-

1. चतुश्चत्वारिंशदुत्तरपञ्चशताधिकद्विसहस्रतमे ।

नाम्ना 'गौतम' इति जातिनाम्ना 'शाक्यमुनि'रिति, मतदर्शनाद् 'बुद्ध' इति च प्रसिद्ध आसीत् । सप्तमेऽह्नि मात्रा वियुक्तम् एनं मातृष्वसा गौतमी परिवर्धयामास । अयम् अधीतविद्यः प्राप्ते यौवने गोपां नाम शाक्यकन्यकां परिणीय तस्यां राहुलाभिधं पुत्रं जनयामास ।

एष मानुषभोगेष्वतिदृढया नश्वरत्वभावनया राज्यभोगाद् विरज्य क्वचन रात्रौ प्रसुप्तशान्ताद् अन्तःपुरात् प्रवव्राज ।

प्रथमं गिरिव्रजम् आसाद्य तत्रत्यासु गुहासु वसद्भ्यः परिव्राजकेभ्य आर्यमततत्त्वानि सम्यग् जग्राह । तावता स्वाभीष्टं सुखम् अलब्धं पश्यन् स बुद्धगयायां घोरं तपश्चरितुम् आरेभे ।

तथा तपस्यन्नयं षट्सु वर्षेष्वतीतेषु क्वचिद् दिने श्रमातिशयाद् मूर्च्छितो बभूव; क्षणेन च प्रतिलब्धायां संज्ञायां तपः परिसमापयामास ।

अथ फल्गुनीनद्यास्तीरं प्राप्य कस्यापि बोधिद्रुमस्य मूले यदायं निषसाद, तदा सर्वं पूर्वजन्मवृ-

त्तम् अस्य प्रतिभातम् आसीत्; तत्त्वज्ञानं चोद्बुद्धम् अभवत्।

ततो बुद्धः काश्याम् उरुबिल्वे[1] च बहून् शिष्यान् अविन्दत। सशिष्य एष वीतरागो मुनिः परार्थपराण्यवदातानि कर्माण्याचरन् गुणैकसारैरुपदेशैर्जनान् जातिभेदम् अनादृत्य ततइतः स्वमते प्रवेशयामास।

स मगधेषु राज्ञा बिम्बिसारेणातिवेलं पूज्यमानश्चिरम् उवास। पुनरुत्सुकस्य पितुर्दर्शनाय कपिलवस्तुनगरं गत्वा स्वपुत्रं राहुलं स्वमते प्रावेशयत्। पितृनिर्याणात् परतो मातृष्वसारं भार्यां च स काषायं ग्राहयामास।

अथ मुनिरनपायिनीं कीर्त्तिं जगति प्रतिष्ठाप्य २६२४ तमे कलिवर्षे निर्वाणं प्रपेदे। एनं मुनिं विष्णोरवतारं पुराणानि कीर्तयन्ति॥

## जैनमतम्.

बुद्धमते ये धर्माः, ते प्रायेण जैनमते सन्ति।

1. उरुबिल्लमिति केचित्।

किन्तु जैना जातिभेदम् अङ्गीचक्रुः । एषु केचिद् दिगम्बराः, केचिच्छ्वेताम्बराः । बुद्धसमये जैनानां स्थितिरासीत् । जैनमतं तत्प्रवर्तको महावीरश्च बौद्धग्रन्थे स्मर्यैते । महावीरः शाक्यमुनेः किञ्चित् प्राचीन आसीत् ।

बिम्बिसारश्वशुरस्य स्वसा त्रिशला नाम राज्ञी महावीरस्य जननी । सिद्धार्थो नाम राजा तस्य जनकः । महावीरो वैराग्यसम्पदा तृप्तोऽष्टाविंशे वयसि राज्यं परित्यज्य द्वादश वर्षाणि विवसनो भैक्षं चचार । ततः प्रबुद्धे दिव्यज्ञाने चत्वारिंशतं वत्सरान् सदुपदेशैर्लोकम् अनुगृह्य मुक्तोऽभवत् । अस्य जिन इत्यपि संज्ञा ।

मध्यवारे[1] गुर्जरेषु महीशूरराज्ये काञ्चीमण्डले च सम्प्रति जैना वर्तन्ते ॥

# वैदेशिकानाम् अभियोगाः

तक्षकाः—२५००[2] तमस्य कलिवर्षस्यासन्ने तक्षका भारतं प्रविश्य मगधेषु राजत्वं प्रतिपेदिरे ।

---

1. मध्यवार=Mewar. 2. पञ्चशतोत्तरद्विसहस्रतमस्य ।

ध्वजे तक्षकाङ्कनात् तक्षका इति तेषां व्यपदेशः। तक्षकवंश्यानां राज्ञां दशमं राजानं नन्दं वदन्ति। तस्य मुरायां शूद्रायाम् उत्पन्नं चन्द्रगुप्तम् आहुः। अयमेव चाणक्येन नन्दपुत्रान् निहत्य राज्याधिकारे स्थापित आसीत्॥

पारसीकाः—दॆरयवो[1] नाम राजा पारसीकपतिः २५८५[2] तमे कलिवर्षे भारतं लङ्घयामास। अयं नाविकसेनापतिना सह सिन्धुनदम् उत्तीर्य पञ्चनदस्य भागम् एकं स्वायत्तं कृत्वा स्वदेशं प्रतिनिवृत्तः। इतस्तेन लब्धं धनं पारसीकमहाराज्यस्य वार्षिकायतेस्तृतीयांशाद् अन्यूनम् आसीत्॥

यवनाः[3]—अथ द्विशतवर्षेष्वतीतेषु ग्रीसदेशे मासिदोनियाराष्ट्रे राज्याधिकारं वहन् 'अॅलकसान्द्रो'[4] नाम यवनपतिः १२००००[5] सैनिकैः सह जैत्रयात्रायै प्रातिष्ठत। स पारसीकान् जित्वा अटकसमीपे सि-

---

1. Darius Hystaspes. 2. पञ्चाशीत्यधिकपञ्चशतोत्तरद्विसहस्रतमे. 3. Greeks. 4. Alexander. 5. विंशतिसहस्राधिकेन लक्षेण।

न्धुनदम् उत्तीर्य पञ्चनदं प्राप। वितस्तायां तरणीयायाम् असौ तस्याः पारे प्रतिसैन्यं सन्नद्धम् अपश्यत्। अतो रात्रावयुतेन पदातिभिः साकम् अन्यतस्तां तीर्त्वा प्रातः स प्रतिसैन्यम् अभिजगाम। प्रवृत्ते च चिरं युद्धे ससामन्तः पूरुर्नाम[1] राजा तेन पराजितो बभूव।

पराजितस्याश्वा गजा आयुधानि चालकसान्द्रस्य वशेऽभवन्। अथ प्रह्वतां गताय तस्मै तद्राज्यम् अलकसान्द्रो विससर्ज। तेन तयोः सौहार्द्दं जातम्।

ततश्चन्द्रभागाम् उत्तीर्णोऽसौ द्वितीयं पूरुं विजित्य तद्राज्यं प्रथमाय सुहृदे प्रादात्। ततोऽन्यदपि किञ्चिद् राज्यं जित्वा स तस्मै प्रायच्छत्।

क्रमेण विपाशायाम् उत्तीर्णायां मगधान् आक्रमितुम् इच्छतस्तस्य मतं भक्तिमन्तोऽपि सैनिकाः स्वदेशगमने समुत्सुकतया नान्ववर्तन्त। अतः सेनापतिना नियार्कनाम्नाधिष्ठितान्[2] बहून् सैनिकान् जल-

1. Porus. 2. Nearchus.

वर्त्मना स्वदेशं प्रस्थाप्य परिमितसैन्यः स पारसीकान् अभिप्रतस्थे। वर्षद्वयेऽतीते २७८०[1] तमे कलिवर्षे बाबिलोननगरे समुपजातेन ज्वरेण दिष्टान्तं स जगाम।

भारते स्वदेशीयान् परिष्कारान् सञ्चारयितुम् अस्य तर्ष आसीत्। यद्ययं जिगीषूणाम् अग्रणीर्महाशूरो हिन्दुस्थानं प्राविक्ष्यत्, तदप्यवश्यम् अजेष्यत्।

भारतेऽलकसान्द्रेण जितेषु नगरेषु प्रधानं पाटियालानगरम्।

अलकसान्द्रानन्तरं तद्राज्ये चतुर्धा विभक्ते तत्सेनापतिः सेलूको[2] नाम यवनो भारतादीनां पूर्वदेशानां भागी बभूव। सेलूको मगधेषु पाटलीपुत्रम् अधितिष्ठता चन्द्रगुप्तेन राज्ञा सह योद्धुं सन्नाहम् अकरोत्।

चन्द्रगुप्तो ह्यलकसान्द्रे भारताद् गते शिष्टान् यवनान् निष्कासयामास। यदालकसान्द्रो भारतम् आगतः, तदा पाटलीपुत्रे राजा नन्द आसीत्; से-

1. अशीत्यधिकसप्तशतोत्तरद्विसहस्रतमे. 2. Seleucus.

लूकसमये तु चन्द्रगुप्तः। अथ चन्द्रगुप्तः सेलूकस्य पुत्रीं परिणिनाय; मेगस्तनीशं[1] च यवनं स्वराज्यकार्येष्वधिकृतं चकार। एवं तावच्चन्द्रगुप्तसेलूकयोरयुद्धेन मैत्रीबन्धो जातः।

अस्मात् कालात् प्रभृति यवनानां हिन्दूनां च मिथः संस्तवात् कलासु वैदग्ध्यम् उपचयं प्रपेदे॥

[2]शकहिन्दवः—[3]२५७५ तमे कलिवर्षे शका नाम जातिविशेषा यवनपते राज्यं जित्वा सिन्धुनदपर्यन्तं भारतं स्वायत्तं चक्रुः। एतद्वंश्यो हुविष्कः कश्मीरान् जिगाय। तद्वंश्यः कनिष्को नाम राजा [4]३२०० तमे कलिवर्षे कश्मीरदेशम् अशिषत्। एष शूरश्चीनभूपालादपि करं जग्राह। आत्मनाङ्गीकृतं बुद्धमतं यत्नेन सर्वतः प्रचारयामास॥

गुप्ताः—[5]३४२० तमे कलिवर्षे गुप्ताब्द आरब्धः। गुप्तेषु राजसु समुद्रगुप्तो विश्रुत आसीत्।

---

1. Megasthenes. 2. Indo-scythians. 3. पञ्चसप्तत्युत्तरपञ्चशताधिकाद्विसहस्रतमे. 4. द्विशताधिकात्रिसहस्रतमे. 5. विंशत्युत्तरचतुश्शताधिकात्रिसहस्रतमे।

अयम् अर्थः प्रयागतो लब्धाल्लेखाद् अवगम्यते। आर्यावर्त्तः कामरूपं काञ्ची केरलदेशश्च तस्य शासनेऽवर्तन्त। मालवपतिर्मद्रेश्वरः सिंहलेश्वरश्च तस्मै करं दत्तवन्तः। तत्पिता द्वितीयश्चन्द्रगुप्तः। समुद्रगुप्तस्य पुत्रः कुमारगुप्तः सार्वभौम आसीद् इति लेखान्तराद् ज्ञायते। गुप्तवंशे विश्रुतेषु राजसु चरमः स्कन्दगुप्तः॥

## अशोकः.

अलकसान्द्रे भारतान्निष्क्रान्ते मगधराजो मौर्यश्चन्द्रगुप्तः स्वसाम्राज्यम् उपचितं चकार। तस्य हि षट् लक्षाणि पदातयस्त्रीण्ययुतान्यश्वा नव सहस्राणि गजाश्च सेनायां स्थिताः। तस्य पुत्रो बिन्दुसारो गुणैः पितरम् अनुचकार। बिन्दुसारस्य सुभद्राङ्ग्यां ब्राह्मण्याम् अशोको नाम सूनुरजायत। स पित्रा बाल्य उज्जयिन्यां स्वप्रतिनिधिः स्थापितः।

पितुरनन्तरम् असौ [1] २८४२ तमे कलिवर्षे सिं-

1. द्वाचत्वारिंशदधिकाष्टशतोत्तरद्विसहस्रतमे।

हासनम् आरुरोह । आ कृष्णवेण्या आ च गान्धारदेशाद् अमुष्य निरङ्कुशं साम्राज्यम् अभवत् ।

बुद्धमतं प्रविष्टोऽप्यसौ ब्राह्मणान् बौद्धांश्च तुल्यदृष्ट्या पूजयामास । मतान्तरश्रद्धालूनां जनानां बुद्धमते प्रवेशनम् आत्मप्रियमप्य[1]प्रसभाद् ज्ञानोपदेशेन साधनीयम् आज्ञापयामास । एनेन कारिताः शिलालेखाः प्रयाग इन्द्रप्रस्थे गुर्जरेषूत्कलेषु चोपलभ्यन्ते । अयं प्रजावत्सलः कारुणिकोऽवदातचरितो लोकोत्तरः सम्राड् इति तेभ्योऽवगच्छामः ।

एष न केवलं भारते, किन्तु शकस्थाने चीनेषु च बुद्धमतं प्रचारयितुं तत्त्वोपदेशनिपुणान् बौद्धान् प्राहिणोत् । स्वस्य भ्रातरं महेन्द्रं स्वसारं सङ्घमित्रां च तदर्थे लङ्कां प्रति स प्रेषयामास ।

अथ [2]२८७८ तमे वर्षे स गृहीतकाषायस्तदुत्तरे वर्षे निर्वाणं प्रपेदे ॥

---

1. Not by force. 2. अष्टसप्तत्युत्तराष्टशताधिकद्विसहस्रतमे ।

# मगधराजाः

मगधेषु जरासन्धात् प्रभृति राजानो द्वाविंशतिरासन्। एते बृहद्रथवंश्या इत्युच्यन्ते। तेषु चरमं रिपुञ्जयं हत्वा तस्य मन्त्री शुनिकः स्वपुत्रं प्रद्योतनं राज्येऽभिषिषेच। तद्वंश्याः पञ्च प्रद्योता नाम १३८[1] वर्षाणि राज्यम् अकारयन्। तेषाम् अवसाने शिशुनागो राजा बभूव। तद्वंश्याः शैशुनागा दश राजानो राज्यं ३६२[2] वर्षाण्यपालयन्। तेषु चरमो महानन्दी। तस्य शूद्रायां जातो नन्दः। नन्दोऽष्टभिः पुत्रैः ५०[3] वर्षाणि राज्यं बुभोज। ततो मौर्यश्चन्द्रगुप्तो राज्यम् अशिषद्, यस्य चाणक्यः सहायः प्रख्यायते।

चन्द्रगुप्तवंश्येषु चरमं राजानं बृहद्रथं निहत्य तत्सेनापतिः पुष्यमित्रः सिंहासनं भेजे। अयं २९२३[4] तमस्य २९५९[5] तमस्य च कलिवर्षस्यान्तरालकालम्

---

1. अष्टात्रिंशदधिकं शतम्. 2. द्वाषष्ट्यधिकानि त्रिशतानि. 3. पञ्चाशतम्. 4. त्रयोविंशत्यधिकनवशतोत्तरद्विसहस्रतमस्य. 5. एकोनषष्ट्युत्तरनवशतोत्तरद्विसहस्रतमस्य।

अखिलं राज्यं शास्ति स्म। महाभाष्यकारो भगवत्पतञ्जलिरस्य याजक आसीद् इति पण्डितानाम् ऊहः। ऊहस्थानं च 'इह पुष्यमित्रं याजयाम' इति महाभाष्ये दत्तं लट उदाहरणम् आहुः।

पुष्यमित्रस्य पुत्रोऽग्निमित्रो नाम। अयमेव सुकृती कविचक्रवर्तिना कालिदासेन मालविकाग्निमित्रे नाटके कथानायकः कृतः। पुष्यमित्रवंश्याः शुङ्गा इत्युच्यन्ते।

शुङ्गवंश्येष्वन्तिमं राजानं निहत्य तन्मन्त्री वासुदेवो नाम राज्यं स्वायत्तं चक्रे। तद्वंश्याः काण्वा इत्युच्यन्ते। तेष्वन्तिमं हत्वा शिप्रको नाम तद्भृत्य आन्ध्रवंश्यो राज्यम् अपजहार। शिप्रकवंश्यास्त्रिंशद् राजानः ४५६[1] वर्षाणि राज्यम् अकारयन्। सेयं मगधराजानां परम्परा विष्णुपुराणेऽनुवर्णिता।

अवसितेष्वान्ध्रेषु नानाजातीयैर्मगधराज्यम् आक्रम्य व्याकुलितम् आसीत्॥

---

1. षट्पञ्चाशदधिकानि चतुःशतानि।

# वैदिशिकसंवादः[1]

चन्द्रगुप्तपार्श्ववर्ती मेगस्तनीश आत्मना प्रत्यक्षितां भारतस्थितिं वर्णयाञ्चकार । तदात्वे जनानां विद्या, सम्पत्, सद्गुणाः, शिल्पविज्ञानं, विदेशैः सह वाणिज्यसंव्यवहारः, स्त्रीणां वैदुष्यं, पातिव्रत्यं चादृश्यतेति स वदति । ततः प्राचीनः कश्चिद् ऐतिहासिको यवनपण्डित आह—तात्कालिकान् जनान् सर्वान् अपेक्ष्य प्राधान्यं विदग्धत्वं च हिन्दूनां स्थितम् इति ।

अपि च चीनदेशाद् ३५००[2] तमे वर्षे कश्चिद् यात्रिकः पैाहियानो[3] नाम भारतम् आगतः; ३७३८[4] तमे वर्षे च हियून्त्साङ्गनामापरः । ताभ्यां लिखिते चरितग्रन्थे तादात्विकी भारतस्थितिर्भूयिष्ठम् अभिनन्द्यते ॥

---

1. Information from the foreigners. 2. पञ्चशताधिकत्रिसहस्रतमे. 3. Fahian. 4. अष्टात्रिंशदधिकसप्तशतोत्तरत्रिसहस्रतमे. 5. Hewn-thsang.

# विक्रमादित्यः

शकानां राज्ञाम् अधिकारे वर्धमाने विक्रमादित्यो नाम राजा मालवेषूज्जयिन्यां नगर्यां प्राबल्यं प्रपेदे ।

एष शूरो गुप्तनृपैर्दत्तसाहाय्यः शकान् निश्शेषेण जिगाय । अत एष[1] शकारातिरित्युच्यते । अयं बुद्धमतेनाभिभूतं ब्राह्मणमतं प्रत्युज्जीवयामास । संस्कृते चास्यासाधारणी भक्तिरासीत् । अस्य काले प्रजानां स्वास्थ्यं धनसमृद्धिरुच्चावचानां व्यवसायानाम् उत्कर्षः शास्त्राणाम् उन्मेषः साहित्यस्य परमाभ्युदयश्च सञ्जातम् ।

अस्य सार्वभौमस्य सभां नव विद्वद्रत्नानि भूषयाम्बभूवुः । यद् उच्यते[2]—

'धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्परकालिदासाः ।

1. अस्य 'साहसाङ्क' इत्यपि संज्ञा (सरस्वतीकण्ठाभरणे). 2. (ज्योतिर्विदाभरणे) ।

ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य' ॥

इति ।

एषु धन्वन्तरिर्वैद्यके निपुणः । अमरसिंहो नामलिङ्गानुशासनस्य कर्ता । नाट्यवेदव्याख्यातृष्वन्यतमः श्रीशङ्कुक इति यः स्मर्यते काव्यप्रकाशे, स एव कदाचिद् अयं शङ्कुः स्यात् । वेतालभट्टो नीतिप्रदीपस्य कर्ता । घटकर्परो नीतिसारस्य रचयिता । कालिदासो रघुवंशादीनां काव्यानां प्रणेता । वराहमिहिरो ज्योतिःशास्त्रे ग्रन्थकारः । वररुचिर्ज्यौतिषिको निघण्टुकारश्च ।

मातृगुप्तं नाम कविं विक्रमादित्यः कश्मीरेषु राजानं चकारेति राजतरङ्गिणी वदति । सोऽयं मातृगुप्तः कालिदासान्न भिद्यते, नाम्नोर्द्वयोरर्थसाम्याद् इति केचिद् ऊहन्ते ।

शौर्यं, विद्या, नीतिरौदार्यं प्रजावत्सलत्वम् इत्यादयो गुणा विक्रमादित्ये स्थिताः । अस्मिन्

जनानाम् आबालवृद्धम् अपरिमितोऽनुराग आसीत् अस्य विचित्राः कथा भक्तिपूर्वम् अद्यापि हिन्दवो गायन्ति ।

३०४६[1] तमे कलिवर्षे विक्रमाब्दस्यारम्भात् स एव कालो विक्रादित्यस्य भवितुम् अर्हति । किन्तु चरित[2]ग्रन्थकारसंवादात् सप्तत्रिंशं कलिवर्षशतकं तस्य समयम् आधुनिका ऊहन्ते ॥

## शातवाहनः.

आसीत् कुन्तलेषु प्रतिष्ठानपुरे शातवाहनो नाम राजा । एष शौर्ये विक्रमादित्याद् अन्यूनः शकानां जेता च बभूव । विदुष्याः स्वपत्न्या मलयवत्या उपदेशात् संस्कृताभ्यासे बलवद् एष तृषितोऽभवत् । शिक्षितश्चायं कालापव्याकरणकर्त्रा शर्ववर्मणा पाण्डित्यम् अचिरेण प्रतिपेदे । उदारसरसार्थानां सुभाषितानां कोशं गाथासप्तशतीं नाम प्राकृतभाषामयीम् अयं जग्रन्थ । इमां हर्षचरिते भट्टबाणः स्तौति ।

---

1. षट्चत्वारिंशदधिकत्रिसहस्रतमे. 2. शत्रुञ्जयमाहात्म्यादिग्रन्थानुसारात् '

बृहत्कथायाः कर्ता गुणाढ्योऽस्य सभां भूषयाम्बभूव। कविवत्सलोऽसौ राजा श्रीपालितनामानं महाकविं गुर्जरेषु राजानं चकार।

अस्य 'शालो' 'हालः' 'शालिवाहनः' '[1]आढ्यराज' इत्यपि नामानि सन्ति। [2]द्वात्रिंशे कलिवर्षीये शतके शालिवाहनशकाब्दस्यारम्भात् तमेव कालं शातवाहनस्य मन्यन्ते। तेनायं विक्रमादित्यस्य समासन्नकाल इति फलति, यद्येकत्रिंशं वर्षशतकं विक्रमादित्यस्य निर्विवादं स्यात्।

अयं ज्योतिर्विदो ब्राह्मणात् कुलालकन्यायां जात इति, विक्रमादित्यं वृद्धं बाल्ये जितवान् इति च किञ्चिद् ऐतिह्यम् अस्ति। परं तु तत्र सम्प्रतिपन्नं प्रमाणं न पश्यामः।

सम्प्रति महिषकराज्यस्य पालका राजानः शालिवाहनवंश्या इति प्रसिद्धिरस्ति॥

## भोजः.

अग्निकुला नाम केचित् 'परमाराः' 'पुरिहराः'

1. अयम् अलङ्कारसरस्वतीकण्ठाभरणे स्मृतः. 2. (A. D. 78).

'चालूक्याः' 'गोहनाः' इति चतसृभिः शाखाभिः प्रसिद्धा बभूवुः । तत्र परमाराः शूरतमाः, यद्वंश्यं नवसाहसाङ्कं नाम राजानम् अधिकृत्य नवसाहसाङ्कचरिताख्यं महाकाव्यं परिमलकालिदासो रचयाम्बभूव । परमाराणां राजधान्युज्जयिनी चासीद्; धारा च ।

परमाराणां वंशे भोजनामानस्त्रयो राजान आसन् । ३६७७[1] तमे कलिवर्षे प्रथमो भोजः स्थितः; ३७६७[2] तमे द्वितीयः; ४१४६[3] तमे तृतीयः । तत्र तृतीयभोजो मुञ्जस्य पुत्रः । भोजकृतिरिति प्रसिद्धं सरस्वतीकण्ठाभरणम् एकं व्याकरणेऽपरम् अलङ्कारे चास्ति; तथा शृङ्गारप्रकाशोऽपि । सरस्वतीकण्ठाभरणं तृतीयभोजात् प्राचीनेषु ग्रन्थेषु स्मर्यते । अतस्तृतीयभोज एतत्कर्ता न सम्भाव्यते । संस्कृतपोषणे विदुषाम् आदरणे च भोजो विक्रमार्कम् अनुचकार ॥

---

1. सप्तसप्तत्युत्तरषट्शताधिकत्रिसहस्रतमे. 2. सप्तषष्ट्युत्तरसप्तशताधिकत्रिसहस्रतमे. 3. षट्चत्वारिंशदधिकशतोत्तरचतुस्सहस्रतमे ।

# श्रीहर्षः

३६८० [1] तमे कलिवर्षे श्रीकण्ठनाम्नि जनपदे स्थाण्वीश्वराख्ये नगरे प्रभाकरवर्धनो नाम राजा बभूव। तस्य यशोवत्यां राज्यवर्धनो हर्षवर्धन इति च द्वौ पुत्रौ राज्यश्रीरित्येका कन्या चाजायन्त। तस्य जामातुर्गृहवर्मणो हन्तारं मालवेश्वरं राज्यवर्धनो निजघान। कर्णसुवर्णपतिना गौडाधिपेन शशाङ्कनरेन्द्रगुप्तेन राज्यवर्धने निहते ३७१० [2] तमे वर्षे हर्षवर्धनः सिंहासनं भेजे। अस्य शीलादित्य इति कुमारराज इति च नामनी आस्ताम्। अनेन वीरेण गौडाधिपजयाय प्रस्थितेन कामरूपाधिपो भास्करवर्मा सख्यं बबन्ध। प्रतापे विदुषाम् आदरणे च विक्रमार्कतुल्यः श्रीहर्षोऽभवत्। अनेन बुद्धमतम् आदृतम् आसीत्। कान्यकुब्जमप्यस्य वशे स्थितम्।

महाकविर्भट्टबाणोऽस्य सभाया आभरणं ब-

---

1. अशीत्युत्तरषट्शताधिकत्रिसहस्रतमे. 2. दशोत्तरसप्तशताधिकत्रिसहस्रतमे।

भूव । सोऽयं महाप्रभावो हर्षवर्धनः ३७५२[1] तमे वर्षे लोकान्तरं जगाम ।

अथ पञ्चाशति वर्षेष्वतीतेषु तद्वंश्यं यशोवर्माणं कश्मीरराजो ललितादित्यो जिगाय; यशोवर्मणा लालितं च भवभूतिं महाकविं स्वयं पूजयामास ॥

## वलभिराजा राजपुत्राश्च.

पुरा क्षत्रपा नाम केऽपि राजानः कनिष्कवंश्यानां राज्ञाम् अधश्वराः सन्तः सौराष्ट्रदेशम् अपालयन् । तत आन्ध्रेषु मगधाञ्छासत्सु ते सौराष्ट्रपतयः स्वतन्त्रा बभूवुः । क्षत्रपेषु क्षीणेषु भटार्को नाम सेनापतिर्गुर्जरान् वशे चकार । तस्य राजधानी वलभिर्नाम । तद्वंश्या वलभिराजा इत्युच्यन्ते । कलिवर्षीयात् षट्त्रिंशात् शतकात् प्रभृति आ एकोनचत्वारिंशात् ते सौराष्ट्रराज्यम् अपालयन् ।

तेषाम् अवसितौ राजपुत्रास्तद्राज्यपतयोऽभ-

1. द्विपञ्चाशदधिकसप्तशतोत्तरत्रिसहस्रतमे ।

वन्। ते ह्यग्निकुण्डाद् उत्पन्नाः सुक्षत्रिया इति प्रतीतिः। स्वभावाद् उद्यमिनो बलिनो धीराश्च ते मध्यराज्यान्याक्रम्य बुद्धमतं सर्वतो निरास्थन्; हिन्दुमतं ब्राह्मणमहिमानं च सर्वत्र प्रतिष्ठापयामासुः।

राजपुत्राणां प्रभावे दीप्यमाने वैदेशिकैर्महम्मदीयैः ३८१३[1] तमे ३९७३[2] तमे ४१०३[3] तमे च कलिवर्षे भारतस्याक्रमणं कृतम्। प्राप्तविजयानां च महम्मदीयानां वशे भारताधिपत्यं षट् शतानि वत्सरान् स्थितम् आसीत्॥

# शङ्कराचार्यः कुमारिलभट्टश्च.

शङ्कराचार्य एकोनचत्वारिंशत्तमे वर्षशतके केरलेषु वञ्चिमण्डलान्तर्गते कालटिक्षेत्रे[4] जन्म लेभे। शिशुत्वेऽपि प्रतिभाविशेषो, विषयवैराग्यं, गाम्भीर्यम् इत्येतानि महानुभावताया लक्षणानि तस्मिन् प्रत्यक्षाण्यासन्।

---

1. त्रयोदशाधिकाष्टशतोत्तरत्रिसहस्रतमे. 2. त्रिसप्तत्युत्तरनवशताधिकत्रिसहस्रतमे. 3. त्र्यधिकशतोत्तरचतुस्सहस्रतमे. 4. Kaladi in Travancore state.

स किलाष्टमे वयसि चतुर्थम् आश्रमं स्वीकृत्य बदरिकाश्रमे गोविन्दभगवत्पादाद् गौडपादशिष्याद् ब्रह्मविद्याम् अधिगत्य बहुभिर्व्याख्यानिबन्धैरद्वैतशास्त्रं प्रपञ्चयामास । देशेदेशे सञ्चरन्नसौ प्रबलान् बौद्धान् अन्यांश्च वादे विजित्य ब्राह्मणमतं ग्राहयामास ।

अष्टात्रिंशे वर्षशतके कुमारिलभट्टो नाम कर्मपारम्यवादी पूर्वमीमांसां प्रबलयाञ्चकार यस्य कृतिस्तन्त्रवार्तिकम् इति प्राग् अवदाम ।

आभ्यां कर्मब्रह्ममीमांसकाभ्यां ब्राह्मणमतविरुद्धं मतं, विशेषेण तु बौद्धमतम् अस्तं गमितम् । ग्रन्थेषु च परमतानि शतशो युक्तिभिः खण्डितानि ॥

## वङ्गराजा उत्कलराजाश्च.

अष्टात्रिंशे वर्षशतके वङ्गेषूत्कलेषु च प्रबलानि राज्यान्यासन् । अशोकस्य समये तत्र बौद्धमतं प्रचरितम् । हियून्त्साङ्गस्य काले वङ्गेषु पुण्ड्रं, समतटं, कामरूपं, ताम्रलिप्ती, कर्णसुवर्णम् इति पञ्चसु राज्येषु पञ्च राजानो बभूवुः ।

ततो महम्मदीयकालात् प्राक् त्रिशतीं वत्सराणां पालराजैः सेनराजैश्च वङ्गदेश उपभुक्तः। तेषु पालराजा बौद्धाः; सेनराजास्तु ब्राह्मणमतस्थाः।

उत्कलदेशाद् बौद्धेषु राजसु ययातिकेसरिनाम्ना राज्ञा ३५७६[1] तमे वर्षे निष्कासितेषु केसरिवंश्याश्चतुश्चत्वारिंशद् राजानः शैवाः ४२३४[2] तमवर्षावध्युत्कलान् अपालयन्। तदनन्तरं गाङ्गवंश्या वैष्णवा राजानश्चतुर्विंशतिः ४६३६[3] तमवर्षपर्यन्तम् उत्कलराज्यम् अशिषन्। एषु शैवानां भुवनेश्वरं राजधानी; वैष्णवानां पुरी॥

## कश्मीरराजाः.

कनिष्कादय एकत्रिंशद् राजानः ३१७८[4] तमस्य ३६५०[5] तमस्य च कलिवर्षस्यान्तराले कश्मीरदे-

---

1. षट्सप्तत्यधिकपञ्चशतोत्तरत्रिसहस्रतमे. 2. चतुस्त्रिंशदुत्तरद्विशताधिकचतुःसहस्रतमवर्षावधि. 3. षट्त्रिंशदुत्तरषट्शताधिकचतुःसहस्रतमवर्षपर्यन्तम्. 4. अष्टसप्तत्युत्तरशताधिकत्रिसहस्रतमस्य. 5. पञ्चाशदधिकषट्शतोत्तरत्रिसहस्रतमस्य।

शं बुभुजुः। ततस्तत्र मातृगुप्तो विक्रमादित्येन राज्याधिकारे स्थापितः।

मातृगुप्तात् प्रभृति षट्पञ्चाशद् राजानः षट्शतीं वर्षाणां कश्मीरान् अपालयन्। तेषु प्रवरसेनो ललितादित्यो जयापीडोऽवन्तिवर्मा च प्रसिद्धाः।

प्रवरसेनः शूरश्च महाकविश्चाभवत्। अनेन सेतुबन्धाख्यं प्राकृतकाव्यं विरचितं, यद् भट्टबाणो हर्षचरिते स्तौति।

ललितादित्यो यशोवर्मणो जेता भवभूतिकवेर्बहुमन्ता च प्राग् उक्तः। ३७९९[1] तमाद् वर्षात् प्रभृति स षट्त्रिंशतं वर्षाणि राज्यं शास्ति स्म।

जयापीडो महाभाष्यं ततइतो विशीर्णं प्रयत्नाद् विद्वद्भिः संग्राहयामास। एष ३८४७[2] तमाद् वर्षात् प्रभृति ३८७८[3] तमवर्षावधि राज्यम् अशिषत्।

---

1. एकोनाष्टशताधिकत्रिसहस्रतमात्. 2. सप्तचत्वारिंशदुत्तराष्टशताधिकत्रिसहस्रतमात्. 3. अष्टसप्तत्यधिकाष्टशतोत्तरात्रिसहस्रतमवर्षावधि।

अवन्तिवर्मा ३९५७[1] तमाद् वर्षात् प्रभृति अष्टाविंशतिं वर्षाणि राज्यम् अकारयत्।

ततः सप्तचत्वारिंशे वर्षशतके कश्मीरराज्यं महम्मदीयेष्वधीनम् अभवत्।

## कान्यकुब्जपतयः

पञ्चालदेशेनोपश्लिष्टं 'कान्यकुब्जम्' इत्युक्तम् अधस्तात्। गुप्तै राजभिरिदं राज्यम् उत्कलावधि विस्तारितम् आसीत्।

एकचत्वारिंशे वर्षशतके तत्र प्रभुत्वं वहतः कुतश्चिद् राजपुत्रवंश्याद् भूपतेस्तद्राज्यं महम्मदीयै-रपहृतं बभूव। ततो राजपुत्रा राजस्थानदेशं शरणं गताः॥

## चालुक्याः

एकत्रिंशाद् वर्षशतकात् परत आमगधम् अप्रतिहतशासनानाम् आन्ध्राणां प्रभावे क्रमेणास्तं

1. सप्तपञ्चाशदधिकनवशतोत्तरत्रिसहस्रतमात्।

गते राजपुत्रवंश्याश्चालूक्या नाम दक्षिणखण्डस्य पतयोऽभवन् । तेषाम् अधिकारविषयो नर्मदाकृष्णयोर्नद्योर्मध्यदेशः । सप्तत्रिंशाद् वर्षशतकात् प्रभृति सप्तशतीं वर्षाणां राज्यं चालूक्येषु प्रतिष्ठां लेभे । तेषां राजधानी पूर्वतो राजमहेन्द्री पश्चिमतः कल्याणपुरं च।

महाराष्ट्रनाथः पौलकेशी नाम महाबलो राजा हर्षवर्धनस्याप्यजय्योऽभवत् । एष चोलदेशस्य जेता बुद्धमतस्य ध्वंसयिता चासीत् ॥

## द्रामिलाः

कृष्णाया दक्षिणः कुमारीपर्यन्तो भूखण्डो द्रामिलेष्वधीन आसीत् । तस्मिन्नन्तर्गतेषु चोलेषु पाण्ड्येषु चेरेषु केरलेषु च पृथक् पृथग् राजानः पुरा राज्यम् अकारयन् । तेषु पाण्ड्यराजा मुख्या गण्यन्ते । एते किल कदाचिद् द्रमिलविषयस्य निखिलस्य नायका बभूवुः ।

द्रमिलजनानां तत्त्वदर्शनकालिकाद् आर्यसंस्तवात् प्रागपि वैदग्ध्यं किमपि स्थितम् । तद् आ-

र्यसंस्तवाद् वृद्धिं प्राप्तम् । एषां यवनादिभिर्वैदेशिकैः सह वाणिज्यव्यवहारोऽपि पुरा स्थितः ॥

## बल्लालाः

राजपुत्रवंश्या बल्लाला नामैकचत्वारिंशे वर्ष-शतके कर्णाटदेशं चालूक्यराज्यस्य कञ्चिद् अंशं च वशे चक्रुः । आ च महम्मदीयानाम् आक्रमणात् ४४१२[1] तमवर्षे जातात् ते प्राबल्यम् अवहन् ।

## काकतीयाः

काकतिवंश्या राजानो द्वाचत्वारिंशे वर्षशत-के प्रभुत्वम् अन्ध्रेषु प्रतिपेदिरे । तेषु महाबलः प्रता-परुद्रः ४२६४[2] तमे वर्षे प्रसिद्ध आसीत् । अनेन 'वि-द्यानाथो' नाम पण्डितः सदसि लालितो बभूव । विद्यानाथेन हि प्रतापरुद्रयशोभूषणं नाम काव्यलक्ष-णग्रन्थः प्रणीतः प्रथते ।

---

1. द्वादशोत्तरचतुश्शताधिकचतुस्सहस्रतमवर्षे. 2. चतुष्षष्ट्यधि-कद्विशतोत्तरचतुस्सहस्रतमे ।

चतुश्चत्वारिंशे वर्षशतके दक्षिणखण्डम् अखिलं काकतीयेष्वायत्तम् अभवत् । तेऽपि क्रमेण महम्मदीयैः पराजिताः ॥

## बुक्कवंश्याः

क्षीणेषु बल्लालेषु बुक्कराजो हरिहर इति च द्वौ राजानौ प्रबलौ बभूवतुः । वेदभाष्यकारः सर्वतन्त्रस्वतन्त्रो माधवस्तयोर्मन्त्री बभूव, यः किलापरवयसि यतिभावम् आपद्य विद्यारण्यनाम्नश्शृङ्गपुरे शङ्कराचार्यपीठं भेजे । तयोश्च राज्ञोर्विजयनगरं राजधानी बभूव ।

महम्मदीयसख्यात् तद्वंशे द्विशतवर्षाधिकं कालं राज्यम् अनुवृत्तम् आसीत् । ४६६५[1] तमे वर्षे तदपि महम्मदीयैः कबलितम् ॥

---

1. पञ्चषष्ट्युत्तरषट्शताधिकचतुस्सहस्रतमे.

# साहित्यम्[1].

काव्यं तावत् 'साहित्यम्' इत्युच्यते; काव्यस्य लक्षणं तु 'साहित्यशास्त्रम्' इति। तदुभयं मिलितमपि 'साहित्यम्' इति व्यवह्रियते। अस्यामपि विद्यायाम् आर्याणां कूलङ्कषं विज्ञानम् आसीत्।

ते ह्यर्थेषु शब्देषु च चमत्कारस्य महीयसस्तनीयसो वा सूक्ष्माण्यपि स्थानान्यवर्जयन्तः साहित्यविद्याम् अभिवृद्धेः परां कोटिं निन्युः॥

## काव्यस्वभावाः.

काव्यम्—काव्यं नाम कवेः कर्मोच्यते। तद् गुरुलघुनियमवद्भिः[2] चतुर्भिः पादैरुपेतं चेत् पद्यं भवति। अपादेन पदसन्तानेनोपेतं चेद् गद्यं भवति॥

महाकाव्यम्—पद्यकाव्यं गिरिनगरसमुद्रादीनां वर्णनैरुपेतं बहुसर्गबन्धं चेद् 'महाकाव्यं' भवति; यथा रघुवंशादि। अतादृशं तु खण्डकाव्यं भवति; यथा मेघदूतादि॥

---

1. Literature. 2. Consistent with the rules of long and short syllables.

कथा—गद्यकाव्यं विस्तृतम् अनेकैरुच्छ्वासैः सहितम् 'आख्यायिका' इत्युच्यते; 'कथा' इति च; यथा वासवदत्तादि ॥

चम्पूः—गद्यपद्यमयं काव्यं 'चम्पूः' इत्युच्यते; यथा चम्पुरामायणादि ॥

श्रव्यम्—महाकाव्यं कथा चम्पूरित्येतत् सर्वम् अभिनेयार्थं[1] न भवति; किन्तु श्रवणेन केवलम् आह्लादं जनयति। अतस्तच्छ्रव्यम् इत्युच्यते ॥

दृश्यम्—यस्य काव्यस्यार्था नटैरभिनेया भवन्ति, तद् 'दृश्यम्' इत्युच्यते। दृश्यस्य च 'नाटकं' 'प्रकरणम्' इत्यादयो बहवो भेदा भवन्ति। तेषां मध्ये नाटकं प्रकरणम् इति द्वयं समग्राङ्गतया प्रधानं गण्यते।

यत्रेतिवृत्तं[2] प्रसिद्धं भवति, तन्नाटकम् आहुः; यथा शाकुन्तलादि। यत्रेतिवृत्तं कल्पितं भवति, तत् प्रकरणं वदन्ति; यथा मालतीमाधवादि ॥

---

1. To be adapted to the stage. 2. Story.

**काव्यप्रमेयम्**—उच्चावचा[1] लोकस्वभावा लोकनीतयो राजनीतय उत्तमपुरुषचरितानि सदुपदेशाश्च काव्यस्य विषयाः। तेषां च प्रतिपादनभङ्ग्यः काव्येषु शास्त्रवद् दुरवगाहा[2] न भवन्ति। किन्तु व्युत्पन्नानां व्युत्पित्सूनां[3] च मनस्तुल्यं रञ्जयितुं ताः प्रभवन्ति॥

**वक्रोक्तयः**—नानारूपा हि चमत्कारकारिण्यः[4] कवीनाम् उक्तयो भवन्ति। ता 'वक्रोक्तय' इत्युच्यन्ते।

तत्र काचिद् वक्रोक्तिः कश्चिद् अर्थं विस्पष्टं वदति, ततोऽन्यं तु कञ्चिद् अर्थं सूचयति केवलम्। तत्र सूच्योऽर्थो व्यङ्ग्य[5] इत्युच्यते; तदन्यो वाच्य इति। यस्मिन् कविवाक्ये व्यङ्ग्योऽर्थः प्रधानं, तद् 'ध्वनिकाव्यम्' आहुः; 'उत्तमकाव्यम्' इति च॥

**यथा**—

गोदावर्यास्तीरे दृप्तः प्रतिवसति कोऽपि शार्दूलः।

1. बहुभेदाः. 2. Not easily comperehensible. 3. Desirous to learn. 4. Surprising. 5. Liable to insinuate.

अत्र वाच्योऽर्थो नदीतीरे शार्दूलवासः। 'अतस्तत्र सञ्चारं मा कुरु' इत्ययम् अर्थो व्यङ्ग्यः। व्यङ्ग्य एव चार्थोऽत्र प्रधानभूतः।

काचिद् वक्रोक्तिः कञ्चिद् अर्थं सूचयति; किन्तु सोऽर्थः प्रधानभूतं वाच्यार्थं प्रति केवलम् उपकारको भवति। तादृशं कविवाक्यं 'गुणीभूतव्यङ्ग्यम्' इत्युच्यते; 'मध्यमकाव्यम्' इति च॥

यथा—

तस्य मन्यामहे राज्ञो जयलक्ष्मीं करस्थिताम्।
सहायाः सुभटा यस्य मानवन्तो महौजसः॥

अत्र मानवन्त इति शब्दश्चित्तसमुन्नतिशालित्वं स्पष्टं वदन् युद्धेष्वपलायित्वं भटानां सूचयति। स एष सूच्योऽर्थो न प्रधानभूतः; किन्तु जयसिद्धिरूपं पूर्वार्धवाच्यम् अर्थं साधयति केवलम्।

अपरा वक्रोक्तिर्वाच्यार्थमात्रे विश्रान्तिं लभते।

---

1. गुणीभूतव्यङ्ग्यम् is a division of kavya in which the charm of the suggested sense is not more striking than that of the expressed one.

तादृशं कविवाक्यं 'चित्रम्' इत्युच्यते; 'अधमका-
व्यम्' इति च ॥

**यथा—**

पूर्णचन्द्र इवानन्दं दत्ते पुत्रमुखं पितुः ।

अत्र पुत्रमुखे चन्द्रसाम्यं प्रतिपाद्यत इति
सालङ्कारम् इदं वाक्यम् ।

एवञ्जातीयकेषूत्तममध्यमाधमेषु त्रिषु भेदेषु
पूर्वोक्ताः सर्वे काव्यभेदा अन्तर्भवन्ति ॥

शब्दचित्रम्—यस्मिन् कविवाक्ये वर्णानां
पदानां वावृत्त्या प्रकारान्तरेण वा किञ्चिच्चारुत्वं स्फु-
रति, अर्थः पुनरचारुरेव, तत्र 'शब्दालाङ्कार' उच्य-
ते । अनेन युक्तं काव्यम् अधमाधमं मन्यन्ते सूरयः ।
प्राञ्चस्त्विदमप्यधमकाव्यैः सह गणयन्ति ॥

## साहित्यशास्त्रकाराः

त एते काव्यभेदाः समग्राः साहित्यशास्त्रकारैः
पूर्वैराचार्यैर्विस्तरेण लक्षिताः ।

आचार्येषु मुख्यास्तावद्——

भामहो वामनो दण्डी रुद्रटो भोज उद्भटः ।
आनन्दो महिमा[1] रुय्यमम्मटौ धनिकस्तथा ॥

## काव्यगुणाः.

विचित्राः खलु प्रतिवस्तु स्वभावा भवन्ति । अन्येऽन्ये ह्यङ्गसन्निवेशा अप्राणिनाम्; अन्येऽन्ये प्राणिनाम् । हर्षे विषादे भये लज्जायां कारणान्तरे वा प्राणिनाम् आकारा भिद्यन्ते; क्रिया भिद्यन्ते; चित्तवृत्तयो भिद्यन्ते । सन्तोऽप्येतेषां स्वभावाः सूक्ष्मसूक्ष्मतया कतिपयानामेव कवीनां बुद्धौ प्रतिफलन्ति । तेषाम् एषां वर्णनं काव्यस्यैको गुणः ।

केचिद् अर्थाः सुप्रसिद्धयोपमासामग्रया बुद्धौ प्रतिष्ठाप्यन्ते; केचित् स्पष्टम् उक्तैर्व्यङ्ग्यैर्वा हेतुभिरुपपाद्यन्ते । इत्येवञ्जातीयको द्वितीयो गुणः ॥

एष तृतीयो गुणो——यत् संवादेषु तथावि-

1. महिमभट्टः व्यक्तिविवेकस्य कर्त्तायम् ।

धाबां युक्तीनाम् उपन्यसनं, याभिरेकैकः पक्ष उपपादितो भवन् परिनिष्ठितो भासेत ।

योऽर्थः शास्त्रे प्रतिपाद्यमानो न शक्यते सुखाद् ग्रहीतुं, तस्यापि सुगमया भङ्ग्या प्रतिपादनम् अपरो गुणः ॥

अयमपि गुणो—यल्लोकातिशायिनोऽपि वस्तुनस्तथा वर्णनं, यथा तत्रासम्भाव्यत्वबुद्ध्या बोद्धुरवहेला न स्यात्, प्रत्युताह्लादलोभाद् आभिमुख्यं स्यात् ॥

अयम् इतरो गुणो—यद् अर्थाः सदुपदेशेषु बहुशः पर्यवस्यन्ति[1] ॥

श्रेष्ठोऽयं गुणो—यद् बालस्यापि बुद्धिम् उपरिप्लवमानां[2] काव्यं रञ्जयति, पण्डितस्यापि बुद्धिं गम्भीरगाहिनीम्[3] आह्लादयति ॥

एष शोभाया हेतुः—यद् अर्थानाम् उपन्यसनं न क्वचिन्न्यूनं भवति न चातिरिक्तम्; यच्चापेक्षितस्यानुक्तिरन्यथोक्तिर्वा काव्ये यत्नाद् वर्ज्यते ।

---

1. शोभनेषूपदेशेषु. 2. Superficial. 3. Entering deeply into.

श्रुतमात्रे काव्येऽर्थानां पुर इव परिस्फुरणम्, अंशे परिशीलिते शेषांशानां परिशीलनायाम् उत्कण्ठाजननं, चर्वितचर्वणेऽप्यास्वादस्य नवीभाव इत्यपरे त्रयो गुणाः काव्यस्य भवन्ति।

प्रसिद्धार्थत्वं, कोमलत्वम्, अदीर्घसमासता च पदानाम् औत्सर्गिको गुणो भवति॥

अयमपि पदानां गुणो—यत् तानि पर्यायपरिवृत्तिं[1] स्थानपरिवृत्तिं[2] च न सहन्ते।

'अत्रेदमेवोचितं नान्यद्' इति प्रतिपदमिव प्रत्यर्थं प्रतिभासः परमो गुणः काव्यस्य भवति।

एभिर्गुणैर्युक्तं काव्यं प्रशस्तम् इति निर्णयः॥

## कवयः काव्यानि च.

**कालिदासः**—कालिदासो विक्रमादित्यस्य समकाल इति प्राग् अवोचाम। अस्य कृतयो 'रघुवंशः' 'कुमारसम्भवं' 'मेघदूतम्' इति त्रीणि श्रव्यकाव्यानि; 'मालविकाग्निमित्रं' 'विक्रमोर्वशीयम्'

1. Substitution of synonymes. 2 Transposition.

'अभिज्ञानशाकुन्तलम्' इति च त्रीणि शृङ्गारप्रधानानि दृश्यकाव्यानि ।

निरूपिताः काव्यगुणास्तेषु समग्रा उपलभ्यन्ते । तेष्वपि गुणानां परिपोषे विमृश्यमाने शाकुन्तलरघुवंशयोरुत्कर्षं पश्यामः । अनयोः पदान्यर्थाश्च यावद्विमर्शं हृदयम् उल्लासयन्ति । किं बहुना । शतं वारान् शाकुन्तलं परिशीलितवतोऽपि जनस्य भूयस्तत्र परिशीलनाभिलाषो वर्धेत एव केवलम् ।

एभिः काव्यैः कालिदासः प्रतिष्ठापितः साम्राज्यपीठे कविराज्यस्य ॥

**भवभूतिः**—'मालतीमाधवं' 'महावीरचरितम्' 'उत्तररामचरितम्' इति त्रीणि रूपकाणि भवभूतिना विरचितानि । तेषु प्रथमं प्रकरणम्, अन्ये तु नाटके । एषु प्रथमे शृङ्गारो रसः, द्वितीये वीरः, तृतीये करुणो धर्मवीरो वा । उत्तररामचरितस्य गुणसम्पदि पर्यालोच्यमानायां भवभूतिः कालिदासाद् अनन्तरं कवीनाम् अग्रे गणनाम् अर्हति ।

सूक्ष्मसूक्ष्माणां चित्तवृत्तीनां तज्जन्यानां चाकारेङ्गिता-नां वर्णनेऽस्य महाकवेः सामर्थ्यम् असाधारणं पश्यामः।

अस्याभिजनो विदर्भेषु पद्मावती नाम नग-रम्। एष हर्षवर्धनवंश्यस्य यशोवर्मणः, कश्मीरपते-र्यशोवर्मजेतुर्ललितादित्यस्य च सभायाम् आसीत्॥

**हर्षवर्धनः**—शीलादित्यापरनामा हर्षवर्धन-स्त्रीणि दृश्यकाव्यानि रचयामास। यथा—'प्रियदर्शि-का' 'रत्नावली' 'नागानन्दम्' इति। तत्र द्वयोः शृ-ङ्गारो रसः, नागानन्दे दयावीरः। तेषु नागानन्दं गुण-तो विशिष्यते। इदं नाटकत्रयं श्रीहर्षदेवस्य नाम्ना धावककविर्भट्टबाणो वा चकारेति प्रथास्ति॥

**शूद्रकः**—शूद्रककवेः कृति'मृच्छकटिकं' नाम प्रकरणम्। इदं षट्त्रिंशाद् वर्षशतकाद् उत्तर-स्मिन् काले प्रणीतम् इति पण्डिता ऊहन्ते। इदं काव्यालङ्कारसूत्रकृता वामनेन स्मर्यते। वामनश्च च-त्वारिंशे कलिवर्षशतके स्थितः सम्भाव्यते[1]॥

---

1. उक्तस्य शतकस्योत्तरार्धे स्थितेन ध्वन्यालोककृतानन्दवर्धनेन वामनपक्षोपक्षेपादियं सम्भावना।

**विशाखदत्तः**—'मुद्राराक्षसं' नाम नाटकं विशाखदत्तस्य कृतिः । तत्र कथानायको मौर्यश्च-न्द्रगुप्तः । नन्दान् घातयित्वा मगधराज्यं मौर्याय द-त्तवता चाणक्येन प्रयुक्तान् राज्यस्थिरीकरणार्थान् कुटिलोपायांस्तेषां फलं च कविर्नाटके निपुणं वर्णि-तवान् ।

अयं भोजराजात् तृतीयात् प्राचीनः; यस्माद् इदं नाटकं भोजपितुर्मुञ्जस्य सभास्तारो धनिको दश-रूपके स्मरति ॥

**भट्टनारायणः**—'वेणीसंहारम्' इति प्रसि-द्धं नाटकं भट्टनारायणः प्रणिनाय । अत्र पाण्डवानां कौरवविजयः प्रतिपाद्यो विषयः । सन्दर्भा उक्तिभङ्ग-यश्च प्रायेणात्र रमणीयाः ।

अयम् आदिशूरस्य वङ्गपतेः सभास्तारेषु प-ञ्चसु ब्राह्मणेष्वन्यतमः । तान् किल कान्यकुब्जेश्वरो वीरसेन आदिशूरस्य प्रार्थनया तस्मै विसृष्टवान् । अद्यापि वङ्गेषु भट्टनारायणवंश्या विद्यन्ते । वेणीसं-

हारं वामनेन, चत्वारिंशस्य वर्षशतकस्योत्तरार्धे स्थितेन ध्वन्यालोककृतानन्दवर्धनेन च स्मर्यते ॥

भारविः—भारविः 'किरातार्जुनीयं' नाम महाकाव्यं प्रणीतवान्। अस्मिन्नर्थाः शब्दा रचना वा यत्र यादृशा उचिताः, तत्र तादृशा एवादृताः। पाकस्तु कठिनप्रायः। अस्य कवेः सप्तत्रिंशे कलिवर्षशतके सत्तां वदन्ति ॥

भट्टिः—भट्टिरष्टात्रिंशे कलिवर्षशतके वैलभ्यां[1] श्रीधरसेनस्य राज्ञः सभां भूषयाम्बभूव।

अस्य कृतिर्महाकाव्यं 'रावणवधं', यद् भट्टिकाव्यम् इति विश्रुतम्। यद्यप्यत्र काव्यगुणा न बहुलाः सन्ति, तथापि वैयाकरणानाम् इदम् अतीव रसं जनयति। अत्र हि पाणिनिसूत्राणां लक्ष्याणि काण्डश उदाहृतानि।

शतकत्रयकर्ता भर्तृहरिरस्माद् भट्टेर्न भिद्यत इति कश्चिद् ऊहः ॥

---

1. बलभद्रपुरी।

**माघः**--अस्य कृतिः 'शिशुपालवधं' नाम महाकाव्यम् । अयं शब्दरचनाभङ्ग्या भारविम् अतिशेते । अस्य शब्दचित्रे पक्षपातो भारव्यपेक्षयाधिको दृश्यते । कवितायाः पाके भारविं प्रायेणायम् अनुकरोति । अयं धनिको वदान्यो भोजराजस्य मित्रम् आसीद् इति प्रवादोऽस्ति । किन्त्वेष भोजराजः प्रथमो द्वितीयो वा स्याद्, यस्मान्माघं तृतीयभोजात् प्राचीनो वामनः स्मृतवान् ॥

**श्रीहर्षः**—श्रीहर्षो नाम कश्चिद् ब्राह्मणः शास्त्रेषु निपुणो महाकविस्त्रिचत्वारिंशे कलिवर्षशतके कान्यकुब्जपतेः सदसि स्थितः । 'नैषधचरितं' नाम महाकाव्यम् अस्य कृतिः । सतामसतां वार्थानाम् उल्लेखे भारविमाघावयम् अतिशेते । पाकः पुनरस्य वाचाम् आपादचूडं कठिनः । अस्य कृतयोऽन्या अपि सन्ति ॥

**दण्डी**--अष्टात्रिंशस्य वर्षशतकस्यादौ दण्डी 'दशकुमारचरितं' नाम गद्यकाव्यं विरचितवान् । राजकुमाराणां दशानाम् अद्भुता वृत्तान्ता अत्र प्रति-

पाद्यन्ते । अत्र यावान् कथायां चमत्कारो, न तावान् वाक्येषु चमत्कारः ॥

**भट्टबाणः**——भट्टबाणस्य कृती द्वे गद्यकाव्ये, 'हर्षचरितं' 'कादम्बरी'ति । अत्र श्लेषम् उत्प्रेक्षाम् अतिशयोक्तिं चावलम्ब्य कविर्वाक्यजालम् अभिवर्षति । अत्र संवादप्रकरणानि सर्वाणि शब्दतोऽर्थतश्च चमत्कारम् अतीव जनयन्ति ।

'चण्डीशतकं' नाम देवीस्तोत्रम् अस्यैव कृतिः । अयं सूर्यशतककर्तुर्मयूरकवेर्जामातेति प्रवादोऽस्ति ॥

**सुबन्धुः**——'वासवदत्ता' नामाख्यायिका सुबन्धुकवेः कृतिः । एनां भट्टबाणो हर्षचरितेऽभिनन्दति । अमुं महाकविं भट्टबाणस्य समकालम् आचक्षते ॥

**पञ्चतन्त्रम्**——'पञ्चतन्त्रं' बालेभ्यः सदर्थान् अक्लेशेन बोधयन्तीभिः सरसाभिः कल्पितकथाभिः सान्द्रं ललितचूर्णकभूयिष्ठं च भवति । तच्च केनापि विष्णुशर्मनाम्ना पण्डितेन सङ्कलितम् ।

इदं सप्तत्रिंशे वर्षशतके पारसीकभाषायां ततो वैनायुभाषायां च संक्रान्तम् आसीत्। द्वाचत्वारिंशस्य वर्षशतकस्याष्टमे दशके वनायुभाषासकाशाद् [1]येवनभाषां ततो [2][3]रोमकभाषां च पञ्चतन्त्रम् उपसंक्रामति स्म। [4]४३५० तमे वर्षे ततो [5]हीब्रुभाषायां [6]स्पैनभाषायां क्रमेणान्यासु च यौरोपभाषासु तत् प्रसृतं बभूव ॥

**चम्पुरामायणम्**—'चम्पुरामायणं' भोजराजकृतम् इति प्रसिद्धिरस्ति। युद्धोत्तरकाण्डवर्जम् अत्र रामायणस्य कथा संक्षिप्य वर्ण्यते। इदं सुकुमारसरसपाकानां गद्यानां, विशेषेण तु पद्यानां गुणमहिम्ना सर्वाश्चम्पूरतिशेते ॥

**गीतगोविन्दम्**—किमपि गीतकाव्यं 'गीतगोविन्दं' नाम। सरसैः श्लोकैर्गीतिभिश्च रागतालानुगुणाभिरुपेतं विलक्षणम् अस्य काव्यस्य प्रस्थानम्। अत्र श्रीकृष्णस्य शृङ्गारलीलाः प्रतिपाद्यन्ते। अत्र शब्दाः शब्दरचनाश्च स्वभावाद् अतिकोमलाः। ते य-

1. Arabic. 2. Greek. 3. Latin. 4. पञ्चाशदुत्तरत्रिशताधिकचतुस्सहस्रतमे. 5 Hebrew. 6. Spanish.

दि सङ्गीतभङ्ग्या युक्ताः, तर्हि काव्यस्य माधुर्यं किमु वक्तव्यम् ।

अस्य कर्ता जयदेवो नाम महाकविः । अयं त्रिचत्वारिंशे वर्षशतके वङ्गदेशाधिपतेर्लक्ष्मणसेनस्य राज्ञो राजधान्यां कविराज इति प्रसिद्ध आसीत् ॥

गुणाढ्यः---प्रतिष्ठानपतेः शातवाहनस्य सभां महाकविर्गुणाढ्यो भूषयाम्बभूवेत्युक्तम् अधस्तात् । अस्य कृतिः पिशाचभाषामयी चित्रार्था 'बृहत्कथा' नाम, यां भट्टबाणादयः स्तुवन्ति । अस्या ग्रन्थसङ्ख्यां लक्षाधिकाम् आचक्षते । भारतचारिणीनां मिथ्याकथानां बृहत्कथा नूनम् आकरः स्यात् ।

इत एव कथाः समुद्भूताः पञ्चतन्त्रे कादम्बर्यां श्रीहर्षनाटकेष्वन्यत्र च ।

अस्याः संक्षेपं कथासरित्सागराख्यं काश्मीरकः सोमदेवभट्टः [1] ४००६ तमस्य वर्षस्यासन्ने संस्कृतपद्यात्मना चकार। किन्त्वद्यत्वे बृहत्कथा नोपलभ्यते ॥

1. षडधिकचतुस्सहस्रतमस्य ।

प्राकृतम्—प्रकृतेः संस्कृताद् आगतं प्राकृतम् इत्युच्यते। प्राकृतव्याकरणं विक्रमादित्यलालितेषु नवरत्नेष्वन्यतमेन वररुचिना निर्मितम् अस्ति। स प्राकृतभाषाम् इत्थं विभजते——माहाराष्ट्री शौरसेनी पैशाची मागधीति। आसु माहाराष्ट्री प्रशस्ता भवति। यद् आह दण्डी—'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः' इति। आद्ययोः संस्कृतम्, अन्त्ययोः शौरसेनी च प्रकृतिः। अस्ति पाली नाम भाषा। सापि प्राकृतविशेषः संस्कृताद् उत्पद्य सहस्राधिकान् वत्सरान् प्रचरिता बभूव।

सत्यपि प्राकृतस्य प्रचारे कालिदासादिकाले कुलीनैः संस्कृतम् एव व्यवहृतम् आसीत्। सोऽयं भाषाणां व्यवहारस्वभावः प्राचीनेषु नाटकेषु प्रकाशते। अत्यन्तसाम्याद् आसां प्राकृतभाषाणां संस्कृतेन सह निवेशनं शोभावहम् इति कृत्वा स एव प्राचीनः सम्प्रदाय आदृतोऽर्वाचीनेषु नाटकेषु।

तदेवम् अतिप्रसिद्धाः साहित्यशास्त्रकाराः कवयः काव्यग्रन्थाश्च निर्दिष्टाः। अन्येऽपि तु प्रशंसार्हा बहवः सन्ति॥

# उपसंहारः

एतावता प्रबन्धेनैतद् उक्तं भवति—आर्या बहुवर्षसहस्रेभ्यः प्राग् भारतखण्डं प्रविष्टाः; तत्र स्थितान् मृगनिर्विशेषान् हिंस्रान् जनान् दमयामासुः; ग्रामनगरजनपदान् निरवर्तयन्; कृषिं शिल्पं वाणिज्यं च प्रवर्तयामासुः; संस्कृतभाषया व्यवजह्रुः; ज्यौतिषं गणितम् अन्यानि च सूक्ष्माणि शास्त्रतत्त्वानि स्वयम् उपज्ञाय प्राचिन्वन्।

वृत्तिभेदेन ते जातिभेदं वृत्तिसौष्ठवाय व्यवस्थापयामासुः; चातुर्वर्ण्यम् एककुडुम्बदृष्ट्या परस्परहितानि कर्माण्याचरन्तः पालयामासुः; राजनीतिनियमान् ऊर्जस्वलान् अन्वतिष्ठन्।

ते सर्वव्यतिक्रमाङ्कुशम् ईश्वरविश्वासम् अतिदृढम् अवललम्बिरे; महिमातिशयवतो भावान् नानानामभिरुपासीना अपि तेष्वनुस्यूतस्वरूपम् एकमेवेश्वरं भावयाम्बभूवुः; हिंसां पौंश्चल्यं[1] परदाररतिं मद्य-

1. पुंश्चल्या भावः पौंश्चल्यम्=Harlotry.

पानं चात्यन्तं निनिन्दुः; वैदिकान् समांसयज्ञान् मांसकामम् उद्दिश्य प्रवृत्तान् मन्यमानाः कायक्लेशपूर्वां मानसीं भावनामेव पारमार्थिकम् ईश्वरभजनं निश्चिक्युः ॥

वेदमूलकम् इतिहासं कल्पसूत्रं स्मृतिं दर्शनं पुराणं वैद्यकं च ते जग्रन्थुः; क्रमेण भारतम् अखिलम् आक्रम्य विदेशेष्वपि स्थलपथेन जलपथेन च संव्यवहारं[1] चक्रुः ।

चातुर्वर्ण्यविषयायाम् एककुटुम्बदृष्टौ कारणान्तरैः क्षीणायां बुद्धमते च तत्कालाश्वासदायिनि लब्धप्रचारे वर्णबलं हिन्दुमतं च शिथिलं बभूव । दारुणि लोहे शिलायां चाद्भुतं शिल्पम् आर्याणां स्वोपज्ञं बुद्धमतकाल आसीत् । शकयवनादिभिर्वर्णसङ्करोऽपि तेष्ववसरेषु क्वचित् क्वचित् समजनि । आर्यदृष्टानि बहूनि विज्ञानानि परम्परया विदेशेष्वपि पदम् अलभन्त ।

---

1. Transaction.

शकादिभिर्व्याकुलितम् आर्याणां राज्याधिकारं विक्रमादित्यादयः प्रतिष्ठां निन्युः। ते शङ्कराचार्यादयश्च बुद्धमतम् अभिभूय ब्राह्मणमतं ग्लानम् अभ्युत्थापयामासुः। नृत्तगीतवाद्यानामिव साहित्यस्यापि रसम् आर्याः सम्यग् आस्वादयांचक्रुः। अन्ते च भारतसाम्राज्यं महम्मदीयान् जगामेति।

अस्ति तु प्राग् उपदर्शिते कालविभागे विवादः। तथा हि——कलिवर्षशतकस्य द्वादशस्य सप्तदशस्य चान्तरालं हि वेदकालम् ऊहन्ते यौरोपाः पण्डितवराः। पञ्चसहस्रवर्षवृद्धं तु वेदं नवीना हिन्दुपण्डिता मन्यन्ते। स्वमतभक्ताः पुनरार्यहिन्दवः प्रतियन्ति——वेदस्य काल इयत्तया परिच्छेत्तुं न शक्यते। वेदस्तावद् अनादिरीश्वरनिर्मितः। कालत्रयवेदिनो निग्रहानुग्रहशक्ता महानुभावा महर्षयः स्थितपूर्वमेव वेदम् आर्षेण चक्षुषा दृष्टवन्तः। तन्मूला[1]नेव सर्वान् धर्मान् सर्वाणि च शास्त्रतत्त्वानि तदुत्त[2]रकालिकी महर्षिपरम्परा प्रपञ्चयांचकार। इति।

---

1. वेदमूलान्. 2. तेषां (महर्षीणाम्) उत्तरकाले भवा।

त्रयाणाम् एषां पक्षाणां प्रामाण्यं यथा तथा वा भवतु। यौरोपपण्डितानुमिते वेदकाले, बुद्धमुनिकालस्यासन्ने कालेऽपि वा वैदेशिकान् मनुष्यवर्गान् अपेक्ष्य हिन्दुजनवर्गः कलायां वैदग्ध्ये च दूरम् उत्कृष्ट आसीदेव। अस्मिन्नर्थे न कस्यापि विवादावकाशं पश्यामः। तस्माद् आर्यहिन्दवो लोकस्य जरत्तमाः प्रथमोपकारिण इति सिद्धम्।

ग्रीसदेशीया यवना नाम ये प्राग् उक्ताः, तेऽपि बहूनां वस्तुतत्त्वानाम् उपज्ञानेन हिन्दूपज्ञेषु तत्त्वेषु केषांचित् पोषणेन च लोकोपकारिणाम् अग्रे गणनीयाः।

परं त्वेतावान् विशेषः––यद् आर्यहिन्दूनां संस्कारान् महम्मदीयास्तत्समनन्तरा भूयिष्ठम् अस्तमितान् विदधुः, यवनानां संस्कारान् यौरोपा लब्ध्वा परमाम् अभिवृद्धिं प्रापयाञ्चक्रुः। यौरोपा हि वाणिज्ये शिल्पे शास्त्रे साहित्ये नीतौ शौर्ये च मूर्द्धाभिषिक्तं वैदग्ध्यम् अद्यत्वे वहन्तो नवनवानां वस्तुतत्त्वानाम् उपलम्भे सफलम् उद्यमं नित्यम् आचरन्तो जगति प्रथन्ते॥



॥ श्रीः ॥

# भारतानुवर्णनम्.

## आधुनिकस्थितिर्नाम तृतीयो भागः.

उपोद्घातः---वर्षशतानि बहूनि महम्मदीया म्लेच्छतुरुष्कशब्दिता भारतराज्यम् अभुञ्जतेत्यवदाम। तेष्ववसरेषु हिन्दूनां मतजात्याचारविषयं स्वातन्त्र्यं लुप्तप्रायम् आसीत्। तद् एतद् आङ्गलसाम्राज्यकालेऽस्मिन् प्रत्यापन्नम्[1] अस्ति। आङ्गला हि नीतिम् अनुरुन्धाना राज्यं पालयन्ति।

विज्ञानस्य नवनवस्य गवेषणायां स्थितस्य पोषणे च प्रतिभा समुद्यमशीलता वातिचिरात् प्रागेव हिन्दुवर्गं यद्यपि परिजहार, तथापि बुद्धिवैभवं दैवभक्ती राजभक्तिरिति त्रयो गुणाः कुलदायभूता अद्यापि हिन्दून् न त्यजन्ति। विद्याभ्यासे चाद्यत्वे हिन्दवः श्रद्धां भजन्ति; पाण्डित्यं च प्रशंसनीयं बहुप्रकारं यौरोपशास्त्रेष्वर्जयन्ति।

किन्तु काचिद् अलसता परम् आधुनिकेषु हिन्दुषु दृश्यते---यद् एते विद्यमानेषु विद्यायाः फ-

1. Recovered.

ल्पेषु बहुषु राजकीयाधिकारम् एकमेव भूयिष्ठाः कामयन्ते; अर्थिभूयस्त्वाच्च तदलाभे निर्विद्यन्ते ।

अपि च । अनल्पसुषमेष्वल्पमूल्येषु[1] यौरोपशिल्पेषु भारते बहुलम् उपयुज्यमानेषु, सुगमे द्वीपान्तरे, सति च बुद्धिवैभवे यौरोपवैज्ञानिकेभ्यस्तदीयशिल्परीतिम् अभ्यसितुम् एते गणशो न यतन्ते । वाणिज्यं वैनकृषिं[2] च सम्भूयसमुत्थानैर्[3] भूरिभिरिमे नाभिवर्धयन्ति ।

इमाम् अलसताम् एकाम् अपहाय नान्यद् आधुनिकहिन्दूनां वृत्तिषु महद् अवद्यं पश्यामः ॥

# पौराणिकम् आर्यमतम् ।

सर्वेश्वरस्य नाम शक्तिस्त्रिविधा भवति——सृष्टिशक्तिः स्थितिशक्तिः संहारशक्तिरिति । तासु सृष्टिशक्तेः प्राधान्याद् एक एवेश्वरो ब्रह्मेत्युच्यते, स्थितिशक्तेः प्राधान्याद् विष्णुरित्युच्यते, संहारशक्तेः प्राधान्याद् रुद्र इत्युच्यते ।

---

1. अनल्पा सुषमा शोभातिशयो येषां तेषु. 2. Forest cultivation. 3. Joint enterprises.

एवं तावद् ईश्वरस्य तिस्रः पुरुषमूर्त्तयः सि-द्धाः । तिस्रश्चैताः शक्तयस्तेषाम् आदिपुरुषाणां स्त्रि-यः कल्पिताः । सरस्वती लक्ष्मीर्गौरीत्येतासां नामा-नि । इत्थं त्रिषु मिथुनेषु सिद्धेषु गणेशः सुब्रह्मण्य इत्याद्यास्तेषां सन्ताना दिव्यपुरुषाः सिद्धाः, रामः कृष्ण इत्यादयश्चावताराः । सर्व एत आकारा नाम-गुणभेदेऽपि जगदीश्वरस्यैव सम्बन्धिनो भवन्ति ।

यं कमप्याकारम् ईश्वरस्य तृणे दारुणि शिलायां स्थले जले वायावग्नौ सूर्ये वा चिन्तयताम् ईश्वरानुग्रहः सुलभ इति च हिन्दूनां विश्वासः । स भगवान् सर्वज्ञः सदा सर्वत्र सन्निहित इति हि ते-षाम् अवधारणा ।

यो यो यां यां तनुं भक्त्या<br>
श्रद्धयार्चितुम् इच्छति ।<br>
तस्य तस्याचलां भक्तिं<br>
तामेव विदधाम्यहम्' ॥ (भगवद्गीता)

इति खलु भगवान् गायति ।

एषां कल्पितपरिमाणानां ध्याने परिचीयमाने

पारमार्थिकम् अखण्डपरिपूर्णम् ईश्वरस्य रूपं ध्यातुं जनः शक्तो भवति; तथा ध्यानेन च नित्यसुखरूपं मोक्षं प्राप्नोति ।

अपि च । व्यापारसमये तूष्णीमवस्थानसमये वा सर्वदैव जनेनेश्वरः स्मर्तव्यः । प्रायेण हि जनो राजदण्डभयाद् वा जनभयाद् वा पापानि प्रकटम् अनाचरन् दृश्यते; न स्वभावात् । रहसि पापकारिणं प्रति तु राजदण्डनीतेर्जनस्य वा न कापि शक्तिरस्ति । यदि रहस्यपि पापकर्मणां द्रष्टा सर्वसाक्षी कश्चिद् अस्तीति प्रत्ययो भवेत्, तदा नातीव जनः पापम् आचरेद् इति तेषाम् अभिसन्धिः ।

तदिदम् औपनिषदे मते पर्यवसितम् इतिहासपुराणदृष्टं मतम् अद्यत्वे हिन्दव आद्रियन्ते । यत्त्वतिस्तुतिरूपम् अतिनिन्दारूपं वा चित्रम् अर्थजातम् इतिहासपुराणेषु पश्यामः, तत् सर्वं मन्दबुद्धीन् प्रति कर्तव्येषु प्ररोचनार्थम् अकर्तव्येषु प्रद्वेषार्थं च प्रवृत्तं वेदितव्यम् ॥

---

1. हिन्दूनाम् ।

# देवकैङ्कर्यम्.[1]

देवालयः[2]—भारते गणेशस्य सुब्रह्मण्यस्य सरस्वत्या लक्ष्म्या गौर्या विष्णोः शिवस्य चालया वर्तन्ते। रामकृष्णादीनां च विष्णोरवतारमूर्त्तीनां मन्दिराणि सन्ति।

केचिद् देवालयास्तनुरूपाः, केचिद् मध्यमरूपाः, केचिद् अत्युन्नतैर्गोपुरैर्विमानैर्मण्डपैः प्राकारैश्चाद्भुतशिल्पैरुपलक्षिता दृश्यन्ते॥

देवप्रतिमाः[3]—आलयस्य गर्भगृहे देवस्य प्रतिमा मुखकरादिमती काचिद् अचले पीठे प्रतिष्ठापिता भवति। न च सा ततो विभक्तुं शक्या। एषा प्रायः शिलामयी क्वचिद् दारुमयी च भवति। शिवस्य तु मूलप्रतिमा शिलालिङ्गाकारैव। मूलप्रतिमाया द्वितीयापि प्रतिमा रुचिरावयवसन्निवेशा देवालये स्यात। इयम् उत्सवप्रतिमेत्युच्यते। इयं ताम्रमयी पञ्चलोहमयी[4] रूप्यमयी[5] वा भवति। स्वर्णमयी च

---

1. Divine service. 2. Temples. 3. Idols 4. सुवर्ण-रजत-ताम्र-रङ्ग-नागरूपाः पञ्च लोहाः. 5. रूप्यम्=silver.

सा क्वचित् क्वचिद् दृश्यते। केषुचिद् देवालयेषु नानाकारा उत्सवप्रतिमा उपयुज्यन्ते।

विष्णोर्मुख्या परिवारदेवता गरुडः, शिवस्य तु नन्दिकेश्वरः। अनयोः प्रतिमाभिमूलप्रतिमं प्रतिष्ठापिता भवति॥

**नित्यपूजा**—देवालयेषु पूजको देवलक इत्युच्यते। स प्रायेण ब्राह्मणजातिर्भवति।

देवलकोऽतिप्रातः स्नात्वा शुद्धं वासः परिधाय देवालयं प्रविशेत्। नद्यास्तटाकाद् वा शुद्धं तीर्थं सवाद्यनादम् आनयेत्। तैलेन क्षीरेण चन्दनेन च प्रथमम् अभिषिच्य ततस्तेन तीर्थेन मूलप्रतिमाम् अभिषिञ्चेत्। मूलप्रतिमा चेद् दारुमयी सा तीर्थेन प्रोक्षयेत केवलम्।

अथ वस्त्रेण चन्दनेन भूषणेन माल्येन च ताम् अलंकृत्य नानाविधैः पुष्पाञ्जलिभिरर्चकोऽभ्यर्चेत्। ततो धूपं दीपांश्च संप्रदर्श्य नैवेद्यं देवाय निवेदयेत्। नैवेद्यं चान्नम् अन्यो वा धान्यविकारः पायसं वा फलं वा स्यात्।

नैवेद्यान्ते कर्पूरदीपेन देवम् अर्चकः पुनरपि नीराजयेत् । अनन्तरं स परिवारदेवता अभ्यर्चेत् । यथेयं प्रातः पूजा, तथा मध्याह्नपूजा देवस्य भवति । प्रायेण दिवसस्य सकृदेव देवोऽभिषिच्यते; सत्सु निमित्तेष्वसकृदपि ।

अभिषेककर्म शिवस्य प्रधानं भवेत् । अलङ्कारकर्म तु विष्णोर्मुख्यं स्यात् । यद् आहुः—

'अलङ्कारप्रियो विष्णुरभिषेकप्रियः शिवः ।'

इति ।

अतिप्रातरनिर्हृते निर्माल्ये देवस्य दर्शनं बहुफलं वदन्ति । तथाभिषेकसमयो दीपनीराजनावसरश्च मुख्यः कालो देवसेवायाः ।

अद्विजैरर्च्यमानेषु मातृमन्दिरेषु भूतालयेषु चामन्त्रा[1] पूजा भवति । अजः कुक्कुट इत्यादयः प्राणिनोऽप्युपह्रियन्ते । ये जना जात्या कुलेनाचारेण च हीनाः, त एव प्राण्युपहरणरूपायाम् उपासनायां रम-

1. वेदमन्त्ररहितेत्यर्थः ।

न्ते । अपि च पिशाचगृहेषु चण्डालैरुपास्यमानेषु मांसं मद्यं च निवेद्यते ॥

## उत्सवाः.

असति विभवे वर्षस्य द्विः सकृद्वा दारुमये वाहने समारोपितेन देवेन ग्रामः प्रदक्षिणीक्रियते ।

सति तु विभवे देवालयेषु पक्षोत्सवो मासोत्सव ऋतूत्सवोऽयनोत्सवो वर्षोत्सवश्चानुष्ठीयन्ते । उत्सवेषु देवस्य सेवायै परस्सहस्रा जनास्तत इतः सम्मिलन्ति ।

तेषु दशदिवसनिर्वर्त्यो यात्रोत्सवो मुख्यो गण्यते । तस्मिन्नुत्सवे दीक्षानियमैरुपेतो देवलक आगमोक्तेन विधिना ध्वजस्तम्भे ध्वजपटम् आरोपयति प्रथमदिवसे; दशमदिवसे तु तम् अवरोपयति । प्रातर्नक्तं च भिन्नभिन्नेषु वाहनेषु नगरम् अभितो देवस्य यात्रा[1] भवति । तत्र दशमदिवसे या देवयात्रा, सा जनैर्विशेषेणाभिनन्द्यते, यस्मात् तदा देवो रथा-

1. Procession.

रूढ आकृष्यते । रथश्च महान् उत्तुङ्गः परस्सहस्त्रैर्जनैराकर्षणीयो भवति ।

देवस्य सर्वकैङ्कर्यसाधारणो वाद्योपचार उत्सवेषु सातिशयो भवति । अपि च यात्रोत्सवे श्वेतच्छत्रैश्चामरैश्च देव उपचर्यते । भक्ता मनोहराण्यपदानगीतानि गायन्तः केचिद्, वेदपारायणं वर्तयन्तः केचिद् देवम् अनुगच्छन्ति ।

सर्वाण्येतानि देवकैङ्कर्याणि यथाविध्यनुष्ठीयमानानि जनक्षेमाय कल्पन्त इति हिन्दवो विश्वसन्ति ॥

## ग्रामः.

अवरत एको देवालयो ग्रामस्यावश्यकम् अङ्गं भवति । ग्रामेषु गृहाणि पङ्क्तिशोऽवतिष्ठन्ते । तत्र ब्राह्मणवीथ्यब्राह्मणवीथी च प्रायेण मिथो न सङ्करं प्राप्नुतः । ग्रामेषु दक्षिणोत्तरतो वा पूर्वपश्चिमतो वा गृहपङ्क्तिरेका भवति; द्वे वा गृहपङ्क्ती भवतः । तयोरेकस्याः पङ्क्तेरपरा पङ्क्तिरभिमुख्यवतिष्ठते ।

अब्राह्मणवीथ्यां गोपालस्यायस्कारस्य तक्ष्णः स्वर्णकारस्य कुलालस्य वाद्यकारस्य तन्तुवायस्य कैवर्तस्य रजकस्य नापितस्य शौण्डिकस्य च गृहाणि निविशन्ते ।

चण्डालश्रेणी तु ग्रामाद् दूरतो वर्तेत । नगरे पुनरेष नियमो न दृश्यते । ग्रामेऽपि क्वचित् क्वचिन्नानाजातीयानां गृहाणि सङ्कीर्यन्ते । किन्तु तेषां प्रायो मिथः संश्लेषो न भवति ।

केषुचिद् ग्रामेषु नदी पोषिका भवति; केषुचित् कुल्या; केषुचित् तटाकाः । केषुचिद् द्वयं त्रयं वा पोषकं भवति । केषुचिद् ग्रामेषु नद्यास्तटाकस्य वाभावेऽपि प्रभूतजलान् कूपान् स्नानपानयोः कृषौ च जना नदीनिर्विशेषम् उपयुञ्जते । आरामाः केदाराः शाद्वलाः सिकतिलाश्च प्रदेशा ग्रामेषु प्रायशो दृश्यन्ते ।

नानासस्यजातहरितैरनावृतविस्तीर्णैः परिसरोद्देशैर्न केवलं नेत्रानन्दाय ग्रामः कल्पते; किन्तु नि-

र्मलैरन्नपानैः शुद्धवातसम्पदा च द्विपाच्चतुष्पदाम् आ-
रोग्यायापि सम्पद्यते । नगरेषु पुनर्जनसम्बाधात् प्रा-
येण दुर्लभा भवन्ति ग्रामसुलभा एवञ्जातीयका गुणाः ॥

## गृहाणि.

गृहस्य विस्तार उत्सर्गतश्चतुर्हस्तावरो विंश-
तिहस्तोत्तमश्च भवति । दैर्घ्यं तु तस्य परश्शतैर्हस्तै-
र्मितं भवति । गृहस्य पटलं प्रवणाकारं तालपत्रैः के-
रपत्रैर्धान्यस्तम्बैस्तृणविशेषैर्लोष्टविशेषैर्वा विरच्यते ।
अल्पवृष्टिषु देशेषु गृहस्योर्ध्वावरणम् इष्टकाचूर्णनिब-
द्धं समतलाकारं क्रियते । बहुवृष्टिपातेषु केरलादिषु
देशेषु पुनस्तथाविधम् ऊर्ध्वावरणं प्रायेण वर्ज्यते ।

कुट्टिमो द्वारम् अन्तःकुट्टिमो विस्तीर्णं वास-
गृहं भुक्तिशाला महानस इति क्रमेण गृहांशानां स-
न्निवेशः । महानसात् परतोऽनतिदूरे गोष्ठस्य स्थितिः ।
ततो बहिर्देशः ।

गृहस्यैकोपरिभूमिका सामान्यतो भवति । सा

1. Measuring four cubits at the least. 2. Measuring twenty cubits at the greatest.

मालिकेत्युच्यते । मालिका ग्रामेषु प्रायेण कुसूल[1]तां नीयते; नगरेषु तु वासस्थानं क्रियते ।

उपरिभूमिकायाम् अधोभूमिकायां वा वातायनानि न खलु न भवन्ति; किन्तु तानि न बहुलानि, न च विशालानि । अतस्तत्र दिवापि न पर्याप्तः प्रकाशः प्राचीनेषु गृहेषु । नवीनेषु तु गृहेषु नास्य दोषस्यावकाशो दृश्यते ।

द्विभूमानि[2] बहुभूमानि[3] च धनिकानां गृहाणि बहुत्रोपलभ्यन्ते ॥

## अभ्यवहारः.

हिन्दवो नाम प्रकृत्या शालिभोजिनो भवन्ति । शाल्यन्ने प्रधाने गव्यं माहिषं च क्षीरं दधि नवनीतं घृतं चोपसेचनं क्रियते । मधुरादीन् षड् रसांश्चित्ररसं च हिन्दवो रोचयन्ते । नानाविधानि शाकानि व्यस्तानि मिलितानि वाम्ललवणमरिचैरुपस्कृतान्युपदंशपक्षे कुर्वन्ति । न केवलम् अन्नरूपेण, चित्रभक्ष्यरूपेणापि धान्यं हिन्दुभिरुपयुज्यते ।

---

1. कुसूलः=Store house. 2. Double storied. 3. Many storied.

तत्र गोधूमेतराणि यानि धान्यानि षष्टिका-दीनि, तत्प्रधानं नानारसं शाकभूयिष्ठम् अभ्यवहारं दाक्षिणात्या आद्रियन्ते ; औत्तरास्तु गोधूमप्रधानं मधुरमुख्यम् उत्सर्गतः स्पृहयन्ति ।

दक्षिणापथे केषुचिद् देशेषु बहुदिवसपूर्वसिद्धतयात्यम्लम् अन्नम् अन्नरसं चावरजातयो जना अकिञ्चना वा बहुलम् उपयुञ्जते ।

ब्राह्मणान् शूद्रेष्वभिजातान् बल्लालादींश्चापहायान्ये हिन्दवो मांसं भुञ्जते; मत्स्यं च । क्षत्रियवैश्येष्वपि केचिद् मांसम् उपयुञ्जते, केचिन्न । केरलेषु क्षत्रिया नैव मत्स्यमांसे उपयुञ्जते ॥

## कृषिः कर्षकाश्च.

जनपदेषु पर्वतानाम् उपत्यकास्वधित्यकासु च बहुप्रकाराः कृषयो भवन्ति ।

कृष्याश्च भूमयस्त्रिविधा भवन्ति—काश्चिन्नदीमातृकाः, यासु नदीजलैर्व्रीहयः सम्पद्यन्ते । काश्चित्

1. षष्टिकं षष्टिरात्रेण पच्यमानं धान्यम् आदिर्येषां तानि ।

कूपमातृकाः, यासु महोत्सानां कूपानां जलैर्घटीयन्त्रोपनीतैः सस्यानि फलन्ति। काश्चिद् देवमातृकाः, यासु यथाकालम् अभिवृष्टे पर्जन्ये धान्यानि समृद्ध्यन्ते; वृष्ट्युदकैर्वाविरुध्य विनियुज्यमानैस्तानि निष्पद्यन्ते।

तास्वेतासु भूमिषु वत्सरस्य द्विः सस्यफलं कर्षका लभन्ते; देवमातृकायां तु भूमौ तत् सकृल्लभन्ते।

कृषिकर्मठा जना आप्रातरा दिनान्तात् कृषिसम्बद्धेषु व्यापारेषु सज्जन्ते। ते हि बीजवापात् प्राग् युक्तवृषैर्युक्तमहिषैर्वा सीरैर्भूमिम् असकृत् कर्षन्ति; गोमयादीनां च दोहदानां क्षेपेणोपस्कुर्वन्ति। तस्यां प्ररूढेषु बीजेष्वा परिणामात् कालेकाले जलापूरणं तदुद्भवानां कटतृणानां शोधनं परिणामानन्तरं धान्यानां लवनम् इति व्यापारा भवन्ति।

सर्वान् इमान् व्यापारान् अब्राह्मणाः स्वयम् अनुतिष्ठन्ति, अन्यैरनुष्ठापयन्ति च। ब्राह्मणा अभिजाताश्च तान् अन्यैरनुष्ठापयन्ति केवलम्॥

# शिल्पम्.

मृद्भिर्घटान् शरावान् महान्ति भाण्डानि च कुलाला निर्मान्ति। मृण्मयानि पात्राणि भूयिष्ठं दरिद्रा जना उपयुञ्जते।

शिलाभिर्दारुभिश्च स्तम्भद्रोण्यादिकं स्पृहणीयं शिल्पिनो निर्वर्तयन्ति। शिलानां दारूणां च श्लक्ष्णीकरणे तेषु पुत्रिकाणाम् उट्टङ्कने[1] च तेषां नैपुण्यम् अस्ति।

अयसा पित्तलेन सीसेन ताम्रेण रजतेन स्वर्णेन च नानारूपाणि शिल्पानि शिल्पिनस्तन्वन्ति। अयसि तालाः कीलाः शलाका मानान्यायुधानि पात्राणि च निर्मीयन्ते। पित्तले सीसे ताम्रे च तनूनि महान्ति च पात्राणि भूयिष्ठं सृज्यन्ते।

भोजनपात्रं पानपात्रं ताम्बूलकरण्ड इत्येवञ्जातीयकानि धनिकार्हाणि पात्राणि रजतेन क्रियन्ते; भूषणानि च नूपुरहंसकादीनि।

---

1. उट्टङ्कनम्=Sculpture.

सुवर्णकाराः प्रतिदेशं भिन्नप्रकाराण्याभरणानि निपुणं सृजन्ति। आभरणेषु केषुचिद् रत्नानि प्रत्युप्यन्ते; केषुचिन्न। सुवर्णाभरणार्थे भारतीया जना अपरिमितं धनं व्यययन्ति।

आकरोद्भूतानां रत्नोपलानां विचित्रया भङ्ग्या शाणेषु घर्षणे निपुणाः शिल्पिनो बहुत्र वर्तन्ते।

मृगाणां विषाणैश्चर्मभिश्च नानारूपाण्युपकरणानि विरच्यन्ते। गजदन्तैः फलकानां पुत्रिकाणां देवप्रतिमानां च शिल्पं विस्मयावहं केरलीयाः साधयन्ति।

ऊर्णाभिरुच्चावचानां कम्बलानां महामूल्यानां निर्माणे काश्मीरकाः प्रसिद्धाः।

राजपट्टतन्तुभिः कार्पासतन्तुभिश्च केवलैर्मिश्रैश्च विविधानि मूल्यवन्ति वस्त्राणि तन्तुवाया वयन्ति। केषुचिद् वस्त्रेषु राजताः सौवर्णाश्च सूक्ष्मास्तन्तवो भङ्गिभेदैरूयन्ते। तथाविधानां वस्त्राणां मूल्यं रूप्यसहस्रावधि भवति।

उच्छुष्काणां कदलीत्वचां सूक्ष्मतन्तुभिर्वस्त्रम् आच्छादनं च दर्शनीयम् आधुनिका वयन्ति ।

तानीमानि शिल्पानि कासाञ्चिज्जातीनां कुलविद्या भवन्ति । केचित्तु तानि रुचिवशात् स्वेच्छया कुर्वन्ति ॥

## वाणिज्यम् ।

आ ताम्बूलाद् आ च रत्नाद् भारत वाणिज्यम् उच्चावचं क्रमते । भारतोद्भवं पण्यजातं न केवलं भारते, युरोपेऽपि किञ्चिद् परिपण्यते । युरोपनिर्वृत्तास्तु भावा भारते बहुलं परिपण्यन्ते ।

ग्रामेष्वापणा अल्पा विरलाश्च भवन्ति । नगरेषु तु बहुपण्या अविरलाश्च । केषुचिन्नगरेषु पण्यवीथिका अनेका दृश्यन्ते । प्रायः पण्यवीथीषु धान्यापणा वस्त्रापणाश्च पण्यान्तरापणान् अपेक्ष्य सङ्ख्ययातिरिच्यन्ते ।

गोधूमाः षष्टिकादिधान्यानां तण्डुला मुद्गा माषाश्चणकाश्च सुभिक्षसमये लघुमूल्याः । तदा ह्येकेन

रूप्येण सप्त प्रस्था गोधूमस्य, दश षष्टिकादितण्डुल-स्य उपद्वादश धान्यान्तराणां सुलभा भवन्ति।

धान्यं वेसवारोचिताः पदार्थास्तैलं घृतं वस्त्रं च क्रेतृबाहुल्यात् क्षिप्रविक्रयाणि भवन्ति।

अपि च पात्रापणा गन्धापणाः शाकापणाः फलापणाश्च विपणिषु बहुलाः सन्ति। रत्नापणास्तु म-हानगरविपणिषु प्रायश उल्लसन्ति।

भारतीयेषु वाणिज्यस्थानेषु महत्सु मुख्यं म-हाम्बापुरम्। तत्र तदुपनगरेषु च वसन्तः पारसीका भारतवणिक्ष्वभ्यर्हिताः। एषां किल पूर्वपुरुषा अष्टा-त्रिंशे वर्षशतके स्वदेशाद् राज्ञा निष्कासिताः सूर्यप-त्तनम् आजग्मुः; वाणिज्यं च क्रमेणाभिवर्धयामासुः॥

## याचकाः.

वृद्धा अङ्गविकला रोगिणश्चानाथा याच्ञया जीवन्ति। अरोगदृढगात्रा अपि जनाः स्वभावशान्ताः

1. वेसवारः=Particular condiment. 'वेसवार उपस्कर' इ-त्यमरः।

शान्तिम् अभिनयन्तो वा भगवल्लीलापराणि गीता-
नि गायन्तो भैक्षं चरन्ति ।

केचिद् देवकैङ्कर्यायानाथजनपोषणाय च या-
च्ञया धनम् उत्थापयन्तो जीवन्ति ।

केचित् तीर्थाटनपराः सन्तः पाथेयं याच्ञया
लभन्ते ।

केचित् पितृश्राद्धम् उपनयनं विवाहं वा हे-
तुम् उदीरयन्तः किमपि याचन्ते ॥

## दानम्.

याच्यमानो जनो वहुधनो वा भवतु; स्वल्प-
धनो वा । स प्रायेण याचकाय तद्गतान् गुणदोषान्
अनतिविचार्य्य यत्किञ्चिद् वितरति । अयम् अन्त-
तोऽन्नं तण्डुलमुष्टिं वा क्षुधिताय न खलु न प्रयच्छ-
ति । इदं ह्यनादिकालसिद्धं पुण्यं व्रतम् आर्याणाम्,
यद् ‘देहि’ इति वदन् जनः स्वल्पेनापि वा दानेन
सम्भाव्यते; न तु नास्तिवाचा परिभूयते ॥

अपि च पुरातनैर्नवीनैश्च राजभिर्धनिकैर्धार्मिकसङ्घैश्च पथिकार्थे शाश्वतान्यन्नदानसत्राणि भारते भूयिष्ठम् उपकल्पितानि वर्तन्ते । तेषु भोजनं, तदभावे वैदेशिकेभ्यस्तण्डुलादिकं दीयते ।

यद्यपि याचकानाम् एवम् आदरणं निन्दितां याञ्चावृत्तिं बहुलयेत्, तथापि क्लिष्टजीविनां भूयसाम् अवश्यम् आश्वासाय भवतीति तत् पुण्यम् आर्या मन्यन्ते ॥

## जीविका:.

जनेषु बहवः शिल्पं वाणिज्यं च वृत्त्यर्थम् आश्रयन्ते; बहुतराः कृषिं, बहुतमास्तु शुश्रूषाम् ॥

**तौर्यत्रिकम्**—नृत्तेन केचिद् गीतेन केचिद् वादित्रेण केचिज्जीविकां वर्तयन्ति । नृत्तादिकलासु व्यस्तासु समस्तासु च नैपुण्यस्य परां कोटिम् आरूढा बहवः सन्ति ।

तथा भैषज्यम् एके वृत्तिम् आद्रियन्ते; दैवविज्ञानम् अपरे ॥

**भैषज्यम्**---चिरविच्युतमप्यभिवृद्धेरार्यभैषज्यं तत्पक्षपातिनः कतिपये न खलु नाद्रियन्ते । न च न फलं दर्शयति यावद्यत्नं जनेषु तत् ॥

**दैवविज्ञानम्**---भूतं भाविनं वार्थं प्रति पृष्टो दैवज्ञः प्रश्नकालिकीं प्रष्टुर्जन्मकालिकीं वा ग्रहाणां स्थितिम् अवलम्ब्य तम् अर्थं वक्ति । दैवज्ञोक्तेरर्थतः संवादस्यापि दर्शनाद् विसंवादा दैवज्ञस्यापाण्डित्यमेव विशदयन्ति; न तु ज्यौतिषफलशास्त्रस्याप्रामाण्यम् इति हिन्दूनां सामान्यः प्रत्ययः ।

तस्यैतस्य प्रत्ययस्योपोद्बलकं किमपि दैवज्ञचरितम् अस्ति ।

चोलदेश उपकुम्भघोणवर्तिनि 'वलाङ्गिमान्' इत्याख्याते ग्रामे श्रेष्ठी गोविन्दो नाम दैवज्ञो जीवति ।

स प्रष्टुकामं जनम् अपरिचितं देशान्तराद् द्वीपान्तराद् वा स्वगृहम् आगतम् 'उपविश' इत्येकां वाचम् अभिधाय लेखन्या पत्रे किमपि लिखितुम् आरभते । पञ्चषैश्च निमेषैर्लेखनं परिसमाप्य मु-

ङ्कितं तत् पत्रं प्रष्टुरग्रे स निवेशयति; तेन सह क्षणं कृतसम्भाषणश्च 'पत्रं वाचय' इति तम् आदिशति।

पत्रे तु प्रष्टुर्देशो नामधेयं जीविका भार्यापुत्रादिनामानि जिज्ञासितं प्रधानवस्तु इत्येतेऽर्था द्रमिलभाषया विवृता उपलभ्यन्ते।

'यत् किमप्युच्यताम्' इति सम्भाषणकाले दैवज्ञचोदितेन प्रष्ट्रा पद्यं पशुपक्ष्यादिनाम वा संस्कृतभाषारूपम् आङ्गलभाषारूपम् अन्यभाषारूपं वा यद् उच्चारितं भवति, तत् सम्भाषणप्राक्काललिखिते तस्मिन् पत्रे द्रमिललिप्या विन्यस्तं दृश्यते।

पश्यताद्भुतम्—कथं पुनरयं द्रमिलभाषामात्रस्याभिज्ञो दैवज्ञः स्वप्नेऽप्यविदिताया भाषायाः शब्दानुपूर्वीम् अन्येन वक्ष्यमाणां विदितवान्। अस्यैवम्प्रायं चरितम् अद्यापि साक्षात् कर्तुं शक्यं तस्मिन् ग्रामे।

एवञ्जातीयकस्याद्भुतवस्तुनः पर्यालोचनायाम् इतिहासकथिता आर्षाः प्रभावा न तावद् असम्भाव्या भवन्ति।

न केवलं पुमांसः, स्त्रियोऽपि काश्चिद् विप्रश्निकाश्चरन्ति ।

**व्यायामविद्या**—केऽपि व्यायामविद्यया प्रेक्षकान् प्रीणयन्तोऽशनाच्छादने लभन्ते । प्रवीणा हि व्यायामिका उत्तुङ्गे गोपुरस्य शिखरेऽपि वेणुस्तम्भं निखाय तस्याग्रेऽवलग्नमात्रालम्बितेऽद्भुतभीषणानि भ्रमणानि तन्वन्ति ।

आधुनिका व्यायामिकाः पञ्चाशत्पदोन्नत आकाशे लोहतन्त्रीम् आयतां निबध्य तस्यां द्विचक्रयानेन पादवाह्येन लघु चरन्ति केरलेषु ॥

**मृगक्रीडा**—केचिद् अच्छभल्लैर्व्याघ्रैः सिंहैरपि दमितैरप्रमत्ताः क्रीडन्ति ॥

**अहिक्रीडा**—कतिपये साहसिका अहेरुत्फणस्य तुण्डेन स्वनयनम् अञ्जयन्ति । त एत आहितुण्डिका इत्युच्यन्ते । अहयो मन्त्रमूलिकाभ्यां शक्तिनिरोधाद् एतान् न बाधन्त इति हिन्दूनां विश्वासः ॥

---

1. Bicycle.

इन्द्रजालम्——अपरे कौतुककाराः पश्यत्सु प्रेक्षकेषु किमपि वस्तु सन्निधापयन्ति, अन्तर्धापयन्ति च। किन्तु सन्निधानद्वारम् अन्तर्धानद्वारं वा सूक्ष्म-दर्शिनापि न शक्यम् उपलब्धुम्।

कतिपयवर्षेभ्यः प्राक् कश्चित् कौतुकी सदसि कौतुकानि दर्शयन् सुवर्णनाणकान् कांश्चिद् 'उत्तरीयप्रान्तेऽवच्छाद्य रक्ष' इत्युक्त्वा मम हस्तेऽर्पितवान्। अतीतेषु पञ्चषेषु क्षणेषु 'तान् नाणकान् प्रत्यर्पय' इति स माम् अवादीत्। उत्तरीयग्रन्थौ च करधृते मया सद्योऽवमोचितेऽहं सदस्याश्च नाणकम् एकमपि न द्रष्टुम् अलभामहि। एवम्प्रायं कौतुकम् इन्द्रजालम् आहुः॥

# हिन्दुबालाः

विद्याभ्यासः——अद्यत्वे हिन्दुबालाः श्रद्धया विद्याम् अभ्यस्यन्ति। तेषु बहवो देश्यभाषाम् आङ्गलभाषां चाधीयते। संस्कृतमप्यधीयाना बालास्तत्र-तत्र वर्तन्ते। वेदम् अपि सलक्षणं केऽपि परिशील-

यन्ति। किन्तु वेदाध्यायिनो वेदस्य निगदपठने चतुराः पर्यवस्यन्ति; न पुनर्वैदस्यार्थं प्रायशो बुध्यन्ते। वेदस्यार्थम् अवगन्तुं शक्ता निगदपाठिनस्तु विरला उपलभ्यन्ते।

देश्यभाषाङ्गलभाषयोः पाठालया राजशासनेनोपोद्बलिता[1] राजकीयाश्च प्रतिग्रामं प्रतिनगरम् उल्लसन्ति। संस्कृतपाठालयास्तु भारते राजकीयाः पञ्चषाः सन्ति; संस्कृतपक्षपातिभिर्धनिकैरुपकल्पिताश्च कतिपये वर्तन्ते। तेषु बालैरध्ययनं सुकरं भवति। संस्कृतार्थिनां पाठशाला यद्यपि सङ्ख्यया न पर्याप्ताः, तथापि तेषां समानम् आसन्नं वा ग्रामम् अधिवसद्भ्यः पण्डितेभ्योऽध्येतुं तत्रतत्र किञ्चित् सौकर्यम् अस्ति॥

**गृहे वृत्तिः**—विद्याम् अधीयाना बालाः प्रायेण रात्रेश्चरमे यामे प्रबुध्यन्ते। अधीतान् पाठान् असकृद् वाचयन्तस्तदर्थम् एकाकिनः ससहाया वा ते चिन्तयन्ति; सूर्योदयात् प्राक् परतो वा बहिर्विहृत्य नद्यां स्नान्ति; शीतालवस्तु गृह उष्णोदकेन स्ना-

1. Recognized.

न्ति; सौकर्याभावे देहम् आर्द्रवस्त्रेण केवलम् उद्वर्तयन्ति । स्नानानन्तरं बालाः पुण्ड्रं धृत्वा यथोपपन्नम् अन्नं भुञ्जते; गच्छन्ति च पाठालयम् । उपनीताश्चेद् बालाः, कालेकाले सन्ध्याम् उपास्यैवान्नं भुञ्जते ।

सायाह्ने बालाः पाठालयाद् विसृष्टाः कन्दुकादिक्रीडया लङ्घनधावनकरणादिभिर्व्यायामैश्च द्वित्रान् मुहूर्त्तान् नयन्ति । आङ्गलभाषाध्यायिनां क्रीडा आङ्गलरीतिमेव प्रायेणानुसरन्ति ।

ततो रात्रौ भुक्त्वा प्रायेणादशमहोरं पुस्तकानि वाचयन्ति । दक्षाः केचिद् बाला ईषत्करेषु गृहकार्येष्वपि व्याप्रियन्ते पठनम् अबाधमानाः ।

आङ्गलभाषाध्यायिषु बहवो रात्रावत्यल्पमेव समयं स्वपन्ति; आसन्नायां तु परीक्षायां रात्रिम् अखिलां पुस्तकं वाचयन्ति । तम् एतम् अतिश्रमम् आरोग्यभञ्जकम् इतरभाषाध्यायिनो नोपाददते ।

प्रबुद्धतराः कुमारा अनध्यायेषु स्थिरम् अ-

1. होरा=Hour.

स्थिरं वा समाजं मेलयित्वा तत्र क्षोदक्षमान् विषयान् उपन्यस्यन्ति ।

अपि च प्रायेण मातापितृभ्यां गृहे बालास्तथा परिशील्यन्ते, यथा तेषाम् ईश्वरभक्तिर्हिन्दुमतश्रद्धा च जायेत ॥

## पण्डितस्य दिनचर्या.

संस्कृतपण्डिताः केचित् स्वच्छन्दजीविनः केचिद् अन्योपजीविनः । उभयेऽपि ते भूयिष्ठम् आचारान् स्मार्तान् अनुवर्तन्ते ।

ते हि ब्राह्मे तदुत्तरे वा मुहूर्त्ते शयनाद् उत्तिष्ठन्ति; ईश्वरं कांश्चित् क्षणान् ध्यात्वा दिवसकार्यं तस्येतिकर्तव्यतां च पर्यालोचयन्ति; ततो ग्रामाद् बहिर्दूरम् अन्तरं गत्वा कृतहस्तपादशौचा नद्याम् अवतरन्ति; अत्वरं च वारिणि समन्त्रकं स्नात्वा शुद्धाम्बरधारिणः पूर्वसन्ध्याम् उपासते; जप्त्वा गायत्रीम् उदितं सूर्यं नमस्कारैरुपस्थाय धृतपुण्ड्रा मन्त्रान् जपन्ति; अर्वाग् अष्टमहोराया गृहम् आगत्य वेदस्योप-

निषदो वा पारायणं तन्वन्ति; उपनिषदं ब्रह्मसूत्रभाष्यं वा शिष्यान् अध्यापयन्ति; यच्चान्यद् अमुत्त्वाख्येयं तेऽभिमन्यन्ते भगवद्गीतादिकं, तदपि पाठयन्ति।

दशमहोरायाः परतो माध्याह्निकं कर्म कृत्वा ते देवतार्चनम् आरभन्ते। तत्र सालग्रामे विष्णुं बाणलिङ्गे शिवं शोणशिलायां गणेशं प्रतिमासु देवीं स्फटिके चादित्यम् आराधयन्ति यथारुचि। ततो वैश्वदेवं[1] ते विधाय तत्कालसन्निहितेनातिथिना सह द्वादशहोरायाः परतो भुञ्जते।

ततः कांश्चित् क्षणान् विश्रम्य ते ग्रन्थान् वा परिशीलयन्ति; आयव्ययौ वा गणयन्ति; द्वित्रहोरास्वतीतासु व्याकरणं तर्कं मीमांसां काव्यानि चासायं शिष्यान् अध्यापयन्ति। सर्वम् इदम् अध्यापनं प्रायशो भृतिरहितं भवति। ते हि शिष्याणां शुश्रूषया भक्तिपूर्वया परितुष्यन्ति। पाठालयाधिकृतेष्वपि पण्डितेषु केचिद् अभृतकाध्यापनं[2] स्वतन्त्रं गृहे वर्तयन्ति।

1. An offering to all deities (made by presenting oblations to fire before meals). 2. Free teaching.

अस्तं जिगमिषौ सूर्ये ग्रामाद् बहिश्चरित्वा प्रत्यवेक्ष्य वा कृष्याणि क्षेत्राणि नद्यां सन्ध्याम् उपास्य ते गृहम् आगच्छन्ति। तत इमे भोजनात् प्राक् परतश्च पुत्रेभ्य उपदेशान् वितरन्ति; दारांश्च हृदयहारिणीरितिहासकथाः श्रावयन्ति । आ च निद्रागमात् कुडुम्बकार्यविमर्शनैः सल्लापैश्च सदारा मनो विनोदयन्ति ।

ग्रन्थपरिशीलनायां स्वतन्त्रे प्रवचने च नित्यम् आसज्जमाना देहयात्राम् अप्राणिहिंसया वर्तयन्तः स्वल्पैरपि सद्वृत्तिबहुमानलभ्यैर्धनैस्तृप्यन्तः सर्वप्रकारानुकूलैर्धर्मदारैश्चिन्त्यमानयोगक्षेमा अद्यत्वेऽपि पण्डितास्तत्रतत्र मोदन्ते ।

एनान् भूम्ना देश्यभाषापण्डिता मताचारविषयेऽनुकुर्वन्ति ॥

## उपसंहारः

तदेवं सामान्याकारेण काश्चित् साम्प्रतिकीरार्यवंश्यानां स्थितीरवर्णयाम ।

अस्ति तावद् एषां बुद्धिः; अस्ति स्वदेशवृत्तिषु विदेशवृत्तिषु च गुणग्रहणम्; अस्त्यभ्युदयोपायानां विज्ञानम्; सन्ति च पुरुषकारमार्गदर्शिनो यौरोपाः सहायाः।

सम्प्रति सत्याम् इयत्यां सामग्रीसम्पदि यदि हिन्दवो वर्णानाम् एककुडुम्बतां स्मृत्वा जात्युत्कर्षापकर्षमूलाम् अवहेलाम् इर्ष्यां च परस्परस्मिन् सस्नेहवृत्त्या वर्जयन्त आलस्यं जह्युः, तर्ह्यसंशयम् आङ्गलसाम्राज्येन सुकरं भवेद् अनश्वरं[1] भारतस्य क्षेमम्॥

इति भारतानुवर्णने

आधुनिकास्थितिप्रकरणम्।




शुभं भूयात्

---

1. शाश्वतम्।

